१६.

बृ० उ० हृतराज्ये नले भीमः सभार्ये प्रेष्यतां गते ।
द्विजान्प्रस्थापयामास नलदर्शनकांक्षया ॥ ७२५
ततश्चेदिपुरीं रम्यां सुदेवो नाम ब्राह्मणः ।
विचिन्वानोऽथ वैदर्भीमपश्यद्राजवेश्मनि ॥ ७२६
पूर्णचंद्रनिभां श्यामां चारुवृत्तपयोधराम् ।
निबद्धां धूमजालेन प्रभामिव विभावसोः ॥ ७२७
मलपंकानुलिप्तांगीं मृणालीमिव चोद्धृताम् ।
पतिशोकाकुलां दीनां शुष्कस्रोतां नदीमिव ॥ ७२८
विध्वस्तपर्णकमलां वित्रासितविहंगमाम् ।
हस्तिहस्तपरामृष्टां व्याकुलामिव पद्मिनीम् ॥ ७२९
चंद्रलेखामिव नवां व्योम्नि नीलाभ्रसंवृताम् ।
देहं धारयतीं दीनं भर्तृदर्शनकांक्षया ॥ ७३०
भर्ता नाम परं भार्याभूषणं भूषणैर्विना ।
एषा हि रहिता तेन शोभमाना न शोभते ॥ ७३१
रुरोद च भृशं राजन् वैदर्भी शोककर्षिता ।
दृष्ट्वा सुदेवं सहसा भ्रातुरिष्टं द्विजोत्तमम् ॥ ७३२
अथ चेदिपतेर्माता राज्ञश्चांतःपुरात्तदा ।
जगाम यत्र सा बाला ब्राह्मणेन सहाभवत् ॥ ७३३
तथ्यं ज्ञात्वा सुनंदा च राजमाता च भारत ।
रुदंत्यौ तां परिष्वज्य मुहूर्तमिव तस्थतुः ॥ ७३४
उत्सृज्य बाष्पं शनकै राजमातेदमब्रवीत् ।
भगिन्या दुहिता मेसि पिप्लुनानेन सूचिता ॥ ७३५
ततः सा न चिरादेव विदर्भानगमत्पुनः ।
तां तु बंधुजनः सर्वः प्रहृष्टः समपूजयत् ॥ ७३६
सा व्युष्टा रजनीं तत्र पितुर्वेश्मनि भाविनी ।
विश्रांता मातरं राजन्निदं वचनमब्रवीत् ॥ ७३७
मां चेदिच्छसि जीवंतीं मातः सत्यं ब्रवीमि ते ।
यतस्व नरवीरस्य नलस्यानयने खलु ॥ ७३८
दमयन्त्या तथोक्ता तु सा देवी भृशदुःखिता ।
बाष्पेण पिहिता राज्ञी नोत्तरं किंचिदब्रवीत् ॥ ७३९

तदवस्थां च तां दृष्ट्वा सर्वमंतःपुरं तदा ।
हाहाभूतमतीवासीद्भृशं च प्ररुरोद ह ॥　　७४०
ततो भीमं महाराजं भार्या वचनमब्रवीत् ।
दमयंती तव सुता भर्तारमनुशोचति ॥　　७४१
अपाकृष्य च लज्जां सा स्वयमुक्तवती नृप ।
प्रयतंतु तव प्रेष्याः पुण्यश्लोकस्य मार्गणे ॥　　७४२
ततो विदर्भाधिपतेर्नियोगाद्ब्राह्मणास्तदा ।
दमयंतीमथो सृत्वा प्रस्थितास्ते तथाब्रुवन् ॥　　७४३
अथ तानब्रवीद्भैमी सर्वराष्ट्रेष्विदं वचः ।
ब्रूयास्तज्जनसंसत्सु तत्र तत्र पुनः पुनः ॥　　७४४
क्व नु त्वं कितव छित्वा वस्त्रार्धं प्रस्थितो मम ।
उत्सृज्य विपिने सुप्तामनुरक्तां प्रियां प्रिय ॥　　७४५
सा वै यथा त्वयादिष्टा तथा ते त्वत्प्रतीक्षिणी ।
दह्यमाना भृशं बाला वस्त्रार्धेनाभिसंवृता ॥　　७४६
तस्या रुदंत्याः सततं तेन शोकेन पार्थिव ।
प्रसादं कुरु वै वीर प्रतिवाक्यं वदस्व च ॥　　७४७
एवमन्यच्च वक्तव्यं कृपां कुर्याद्यथा मयि ।
वायुना धूयमानो हि वनं दहति पावकः ॥　　७४८
भर्तव्या रक्षणीया च पत्नी हि पतिना सदा ।
तन्नष्टमुभयं कस्माद्धर्मज्ञस्य सतस्तव ॥　　७४९
ख्यातः प्राज्ञः कुलीनश्च सानुक्रोशो भवान्सदा ।
संवृत्तो निरनुक्रोशः शंके मद्भाग्यसंक्षयात् ॥　　७५०
एवमुक्तास्त्वगच्छंस्ते ब्राह्मणाः सर्वतोदिशम् ।
नलं मृगयितुं राजंस्तदा व्यसनिनं तथा ॥　　७५१
अथ दीर्घस्य कालस्य पर्णादो नाम वै द्विजः ।
प्रत्येत्य नगरं भैमीमिदं वचनमब्रवीत् ॥　　७५२
नैषधं मृगयाणेन दमयंति मया नलम् ।
अयोध्यां नगरीं गत्वा भांगासुरिरुपस्थितः ॥　　७५३
श्रावितश्च मया वाक्यं त्वदीयं स महाजने ।
तच्छ्रुत्वा नाब्रवीत्किंचिदृतुपर्णो नराधिपः ॥　　७५४

अनुज्ञातं तु मां राज्ञा विजने कश्चिदब्रवीत्।
ऋतुपर्णस्य भूपस्य विरूपो ह्रस्वबाहुकः ॥ ७५५
शीघ्रयानेषु कुशलो मिष्टकर्ता च भोजने।
विनिश्वस्य च बहुशो रुदित्वा च पुनः पुनः ॥ ७५६
कुशलं चैव मां पृष्ट्वा पश्चादिदमभाषत।
वैषम्यमपि संप्राप्ता गोपायंति कुलस्त्रियः ॥ ७५७
आत्मानमात्मना सत्यो जितः स्वर्गो न संशयः।
रहिता भर्तृभिश्चैव न कुप्यंति कदाचन ॥ ७५८
प्राणांश्चारित्रकवचान्धारयंति वरस्त्रियः।
विषमस्थेन मूढेन परिभ्रष्टसुखेन च ॥ ७५९
यत्सा तेन परित्यक्ता तत्र न क्रोद्धुमर्हति।
प्राणयात्रापरिप्रेप्सोः शकुनैर्हृतवाससः ॥ ७६०
आधिभिर्दह्यमानस्य श्यामा न क्रोद्धुमर्हति।
सत्कृताऽसत्कृता वापि पतिं दृष्ट्वा तथागतम् ॥ ७६१
भ्रष्टराज्यं श्रिया हीनं क्षुधितं व्यसनाऽऽप्लुतम्।
तस्य तद्वचनं श्रुत्वा त्वरितोऽहमिहागतः ॥ ७६२
श्रुत्वा प्रमाणं भवती राज्ञश्चैव निवेदय।
एतच्छ्रुत्वाश्रुपूर्णाक्षी दमयंती शोककर्षिता ॥ ७६३
सुदेवं द्विजमाभाष्य अब्रवीन्मातृसंनिधौ।
गत्वा सुदेव नगरीमयोध्यावासिनं नृपम् ॥ ७६४
ऋतुपर्णं वचो ब्रूहि संपतन्निव कामगः।
आस्थास्यति पुनर्भैमी दमयंती स्वयंवरम् ॥ ७६५
तथा च गणितः कालः श्वोभूते स भविष्यति।
एवं तया तथोक्तो वै गत्वा राजानमब्रवीत् ॥ ७६६
स सांत्वयन्सुवचसा बाहुकं प्रत्यभाषत।
विदर्भान्यातुमिच्छामि दमयंत्याः स्वयंवरम् ॥ ७६७
एकाह्ना हयतत्त्वज्ञ मन्यसे यदि बाहुक।
एवमुक्तस्य कौंतेय तेन राज्ञा नलस्य ह ॥ ७६८
व्यदीर्यत मनो दुःखात्प्रदध्यौ च महामनाः।
दमयंती वदेदेतत्कुर्याद्दुःखेन मोहिता ॥ ७६९

अस्मदर्थे भवेद्वायमुपायश्चिंतितो महान् ।
नृशंसं बत वैदर्भी भर्तृकामा तपस्विनी ॥ ७७०
मया क्षुद्रेण निकृता कृपणा पापबुद्धिना ।
स्त्रीस्वभावश्चलो लोके मम दोषश्च दारुणः ॥ ७७१
स्यादेवमपि कुर्यात्सा विवासाद्गतसौहृदा ।
मम शोकेन संविग्ना नैराश्यात्तनुमध्यमा ॥ ७७२
नैवं सा कर्हिचित्कुर्यात्सापत्या च विशेषतः ।
यदत्र सत्यं वाऽसत्यं गत्वा वेत्स्यामि निश्चितम् ॥ ७७३
इति संचिंत्य मनसा प्रत्यजानान्नराधिपम् ।
ततः परीक्षामश्वानां चक्रे राजन्स बाहुकः ॥ ७७४
अध्यगच्छत्कृशानश्वान्समर्थानध्वनि क्षमान् ।
तेजोबलसमायुक्तान्पृथुप्रोथान्महाहनून् ॥ ७७५
शुद्धान्दशभिरावर्तैः सिंधुजान्वातरंहसः ।
ततो युक्तं रथं राजा समारोहत्त्वरान्वितः ॥ ७७६
ते चोद्यमाना विधिवद्बाहुकेन हयोत्तमाः ।
समुत्पेतुरथाकाशं रथिनं मोहयन्निव ॥ ७७७
स नदीः पर्वतांश्चैव वनानि च सरांसि च ।
अचिरेणातिचक्राम खेचरः खे चरन्निव ॥ ७७८
तथा प्रयाते तु रथे पटो निपतितो नृप ।
ऋ० उ० निगृह्णीष्व महाबाहो पटमानयतां मम ॥ ७७९
नल० उ० योजनं समतिक्रांतो नाहर्तुं शक्यते रथः ।
एवमुक्तो नलेनाथ आससाद बिभीतकम् ॥ ७८०
तं दृष्ट्वा बाहुकं राजा त्वरमाणोऽभ्यभाषत ।
सर्वः सर्वं न जानाति सर्वज्ञो नास्ति कश्चन ॥ ७८१
ममापि सूत पश्य त्वं संख्याने परमं बलम् ।
प्रचिनुह्यस्य शाखे द्वे याश्चाप्यन्याः प्रशाखिकाः ॥ ७८२
आभ्यां फलसहस्रे द्वे पंचोनं शतमेव च ।
ततो रथमवस्थाप्य राजानं बाहुकोऽब्रवीत् ॥ ७८३
अथात्र गण्यते राजन्विद्यते न परोक्षता ।
सोऽवतीर्य रथात्तूर्णं शातयामास तं द्रुमम् ॥ ७८४

गणयित्वा च तं प्राह तावन्त्येव फलानि तु ।
नल० उ० अत्यद्भुतमिदं राजन्दृष्टवानस्मि ते बलम् ॥ ७८५
ऋतु० उ० विद्ध्यक्षहृदयज्ञं मां संख्याने च विशारदम् ।
बाहुकस्तमुवाचाथ देहि विद्यामिमां मम ॥ ७८६
मत्तोऽपि चाश्वहृदयं गृहाण पुरुषर्षभ ।
ऋतुपर्णस्ततो राजा बाहुकं कार्यगौरवात् ॥ ७८७
हयज्ञानस्य लोभाच्च तां विद्यां प्रददौ नले ।
तस्याक्षहृदयज्ञस्य शरीरान्निसृतः कलिः ॥ ७८८
कर्कोटकविषं तीक्ष्णं मुखात्सततमुद्वहन् ।
ततो विषविमुक्तात्मा स्वरूपमकरोत्कलिः ॥ ७८९
तं शप्तुमैच्छत्कुपितो निषधाधिपतिर्नलः ।
तमुवाच कलिर्भीतो वेपमानः कृतांजलिः ॥ ७९०
कोपं संयच्छ नृपते कीर्तिं दास्यामि ते पराम् ।
ये हि त्वां मनुजा लोके कीर्तयिष्यंत्यतंद्रिताः ॥ ७९१
मत्प्रसूतं भयं तेषां न कदाचिद्भविष्यति ।
एवमुक्तो नलो राजा न्ययच्छत्कोपमात्मनः ॥ ७९२
ततो भीतः कलिः क्षिप्रं प्रविवेश बिभीतकम् ।
बिभीतकश्चाप्रशस्तः संवृत्तः कलिसंश्रयात् ॥ ७९३
नलोऽपि नोदयामास प्रहृष्टेनान्तरात्मना ।
हयान्विदर्भाभिमुखो द्विजानिव पुनः पुनः ॥ ७९४
ततो विदर्भान्संप्राप्तः सायाह्ने प्राविशत्पुरम् ।
नादयन्रथघोषेण सर्वाः स विदिशो दश ॥ ७९५
दमयन्त्यपि शुश्राव रथघोषं नलस्य तम् ।
दम० उ० यथासौ रथनिर्घोषः पूरयन्निव मेदिनीम् ॥ ७९६
ममाह्लादयते चेतो नल एष महीपतिः ।
यदि वै तस्य वीरस्य बाह्वोर्नाद्याहमंतरम् ॥ ७९७
प्रविशामि सुखस्पर्शं न भविष्याम्यसंशयम् ।
यदि मां मेघनिर्घोषो नोपगच्छति नैषधः ॥ ७९८
अद्य चामीकरप्रख्यं प्रवेक्ष्यामि हुताशनम् ।
गुणास्तस्य स्मरंत्या मे तत्पराया दिवानिशम् ॥ ७९९

हृदयं दीर्यत इदं शोकात्प्रियविनाकृतम् ।
एवं विलपमाना सा नष्टसंज्ञेव भारत ॥ ८००
आरुरोह महद्वेश्म पुण्यश्लोकदिदृक्षया ।
सा ददर्शाथ शोकार्ता बाहुकं नच नैषधम् ॥ ८०१
शंकमाना च भर्तारं बाहुकं पुनरिंगितैः ।
केशिनीं प्रेषयामास बाहुकस्य परीक्षणे ॥ ८०२
ज्ञात्वा च बहुभिश्चिह्नैर्नलं पित्रे न्यवेदयत् ।
सा च पित्राऽभ्यनुज्ञाता मात्रा च भरतर्षभ ॥ ८०३
नलं प्रवेशयामास यत्र तस्याः प्रतिश्रयः ।
तां स्म दृष्ट्वैव सहसा दमयंतीं नलो नृपः ॥ ८०४
आविष्टः शोकदुःखाभ्यां बभूवाश्रुपरिप्लुतः ।
ततः काषायवसना जटिला मलपंकिनी ॥ ८०५
बाष्पगद्गदया वाचा बाहुकं वाक्यमब्रवीत् ।
पूर्वं दृष्टस्त्वया कश्चिद्धर्मज्ञो नाम बाहुक ॥ ८०६
सुप्तामुत्सृज्य विपिने गतो यः पुरुषः स्त्रियम् ।
अनागसं प्रियां भार्यां विजने श्रममोहिताम् ॥ ८०७
अपहाय तु को गच्छेत्पुण्यश्लोकमृते नलम् ।
साक्षाद्देवानपाहाय वृतो यः स पुरा मया ॥ ८०८
अनुव्रतां साभिकामां पुत्रिणीं त्यक्तवान्कथम् ।
दमयंत्या ब्रुवंत्यास्तु सर्वमेतदरिंदम ॥ ८०९
शोकजं वारि नेत्राभ्यामसुखं प्रास्रवद्बहु ।
अतीव कृष्णताराभ्यां रक्तांताभ्यां जलं तु तत् ॥ ८१०
परिस्रवन्नलो दृष्ट्वा शोकार्तामिदमब्रवीत् ।
मम राज्यं प्रनष्टं यन्नाहं तत्कृतवान्स्वयम् ॥ ८११
कलिना तत्कृतं भीरु यच्च त्वामहमत्यजम् ।
मम च व्यवसायेन तपसा चैव निर्जितः ॥ ८१२
दुःखस्यांतेन चानेन भवितव्यं हि नौ शुभे ।
विमुच्य मां गतः पापस्ततोऽहमिह चागतः ॥ ८१३
त्वदर्थं विपुलश्रोणि नहि मेऽन्यत्प्रयोजनम् ।
कथं नु नारी भर्तारमनुरक्तमनुव्रतम् ॥ ८१४

उत्सृज्य वरयेदन्यं यथा त्वं भीरु कर्हिचित् ।
दूताश्चरंति पृथिवीं कृत्स्नां नृपतिशासनात् ॥ ८१५
भैमी किल स्म भर्तारं द्वितीयं वरयिष्यति ।
स्वैरवृत्तो यथाकाममनुरूपमिवात्मनः ॥ ८१६
श्रुत्वैव चैवं त्वरितो भांगासुरिरुपस्थितः ।
दमयंती तु तच्छ्रुत्वा नलस्य परिदेवितम् ॥ ८१७
प्रांजलिर्वेपमाना च भीता वचनमब्रवीत् ।
उपायोऽयं मया दृष्टो नैषधाऽऽनयने तव ॥ ८१८
त्वामृते नहि लोकोऽन्य एकाह्ना पृथिवीपते ।
समर्थो योजनशतं गंतुमश्वैर्नराधिप ॥ ८१९
स्पृशेयं तेन सत्येन पादावेतौ महीपते ।
यथा नासत्कृतं किंचिन्मनसापि चराम्यहम् ॥ ८२०
अयं चरति लोकेऽस्मिन्भूतसाक्षी सदागतिः ।
एष मे मुंचतु प्राणान्यदि पापं चराम्यहम् ॥ ८२१
यथा चरति तिग्मांशुः परेण भुवनं सदा ।
स मुंचतु मम प्राणान्यदि पापं चराम्यहम् ॥ ८२२
चंद्रमाः सर्वभूतानामंतश्चरति साक्षिवत् ।
स मुंचतु मम प्राणान्यदि पापं चराम्यहम् ॥ ८२३
एते देवास्त्रयः कृत्स्नं त्रैलोक्यं धारयंति वै ।
विब्रुवन्तु यथा सत्यमेतद्देवास्त्यजंतु माम् ॥ ८२४
एवमुक्तस्तथा वायुरंतरिक्षादभाषत ।
नैषा कृतवती पापं नल सत्यं ब्रवीमि ते ॥ ८२५
तथा ब्रुवति वायौ च पुष्पवृष्टिः पपात ह ।
देवदुंदुभयो नेदुर्ववौ च पवनः शिवः ॥ ८२६
तदद्भुतमयं दृष्ट्वा नलो राजाथ भारत ।
दमयंत्यां विशंकां तामुपाकर्षदरिंदमः ॥ ८२७
ततः स्ववस्त्रमजरं प्रावृणोद्वसुधाधिपः ।
संस्मृत्य नागराजं तं ततो लेभे स्वकं वपुः ॥ ८२८
स्वरूपिणं तु भर्तारं दृष्ट्वा भीमसुता तदा ।
प्राक्रोशदुच्चैरालिंग्य पुण्यश्लोकमनिंदिता ॥ ८२९

ततः स्वोरसि विन्यस्य वक्त्रं तस्य शुभानना ।
परीता तेन दुःखेन निशश्वासायतेक्षणा ॥ ८३०
तथैव मलदिग्धांगीं परिष्वज्य शुचिस्मिताम् ।
सुचिरं पुरुषव्याघ्रस्तस्थौ शोकपरिप्लुतः ॥ ८३१
ततस्तौ सहितौ रात्रिं कथयंतौ पुरातनम् ।
वने विचरितं सर्वमूचतुर्मुदितौ नृप ॥ ८३२
स चतुर्थे ततो वर्षे संगम्य सह भार्यया ।
सर्वकामैः सुसिद्धार्थो लब्धवान्परमां मुदम् ॥ ८३३
दमयंत्यपि भर्तारमासाद्याप्यायिता भृशम् ।
अर्धसंजातशस्येव तोयं प्राप्य वसुंधरा ॥ ८३४
अथ तां व्युषितो रात्रिं नलो राजा स्वलंकृतः ।
वैदर्भ्या सहितः काले ददर्श वसुधाधिपम् ॥ ८३५
ततोऽभिवादयामास प्रयतः श्वशुरं नलः ।
ततो नु दमयंती च ववंदे पितरं शुभा ॥ ८३६
ऋतुपर्णोऽपि शुश्राव बाहुकच्छद्मिनं नलम् ।
तमानाय्य नलं राजा क्षमयामास पार्थिवम् ॥ ८३७
स च तं प्रददौ विद्यां पूर्वमेव प्रतिश्रुताम् ।
सोऽपि लब्ध्वा हयज्ञानं ययौ स्वपुरमेव च ॥ ८३८
नलोऽथ निषधान् गत्वा जित्वाक्षैश्चापि पुष्करम् ।
स्वपुरं प्रेषयामास परिष्वज्य पुनः पुनः ॥ ८३९
एवं संप्राप्तराज्यश्रीर्दमयन्त्या च संगतः ।
वर्तयामास मुदितो देवराडिव नंदने ॥ ८४०
दुःखमेतादृशं प्राप्तो नलः परपुरंजयः ।
देवनेन नरश्रेष्ठ सभार्यो भरतर्षभ ॥ ८४१
एकाकिनैव सुमहन्नलेन पृथिवीपते ।
दुःखमासादितं घोरं प्राप्तश्चाभ्युदयः पुनः ॥ ८४२
त्वं पुनर्भ्रातृसहितः कृष्णया चैव पांडव ।
रमसेऽस्मिन्महारण्ये धर्ममेवानुचिंतयन् ॥ ८४३
ब्राह्मणैश्च महाभागैर्वेदवेदांगपारगैः ।
नित्यमन्वास्यसे राजंस्तत्र का परिदेवना ॥ ८४४

श्रुत्वेतिहासं नृपते समाश्वसिहि मा शुचः ।
व्यसने त्वं महाराज न विषीदितुमर्हसि ॥ ८४५
कर्कोटकस्य नागस्य दमयन्त्या नलस्य च ।
ऋतुपर्णस्य राजर्षेः कीर्तनं कलिनाशनम् ॥ ८४६
अस्थिरत्वं च संचिंत्य पुरुषार्थस्य नित्यदा ।
तस्योदये व्यये चापि न चिंतयितुमर्हसि ॥ ८४७
भयं पश्यसि यच्च त्वमाह्वयिष्यसि मां पुनः ।
अक्षज्ञ इति तत्तेऽहं नाशयिष्यामि पार्थिव ॥ ८४८
वेदाऽक्षहृदयं कृत्स्नमहं सत्यपराक्रम ।
उपपद्यस्व कौंतेय प्रसन्नोऽहं ब्रवीमि ते ॥ ८४९
ततोऽक्षहृदयं प्रादाद्बृहदश्वो महात्मने ।
दत्वा चाश्वशिरोऽगच्छदुपस्प्रष्टुं महातपाः ॥ ८५०

---

## १७

वै० उ० लोमशः सुमहातेजा ऋषिस्तत्राजगाम ह ।
उपातिष्ठन्महाभागं दिवि शक्रमिवामराः ॥ ८५१
स पृष्टः पांडुपुत्रेण प्रीयमाणो महामनाः ।
उवाच श्लक्ष्णया वाचा हर्षयन्निव पांडवान् ॥ ८५२
संचरन्नस्मि कौंतेय सर्वांल्लोकान्यदृच्छया ।
गतः शक्रस्य भवनं तत्रापश्यं सुरेश्वरम् ॥ ८५३
तव च भ्रातरं वीरमपश्यं सव्यसाचिनम् ।
शक्रस्यार्धासनगतं तत्र मे विस्मयो महान् ॥ ८५४
यत्त्वयोक्तो महाबाहुरस्त्रार्थे भरतर्षभ ।
तदस्त्रमाप्तं पार्थेन रुद्रादप्रतिमं विभो ॥ ८५५
तत्समंत्रं ससंहारं सप्रायश्चित्तमंगलम् ।
वज्रमस्त्राणि चान्यानि दंडादीनि युधिष्ठिर ॥ ८५६
यमात्कुबेराद्वरुणादिंद्राच्च कुरुनंदन ।
अस्त्राण्यवाप्तवान्पार्थो दिव्यान्यमितविक्रमः ॥ ८५७
विश्वावसोस्तु तनयाद्गीतं नृत्यं च साम च ।
वादित्रं च यथान्यायं प्रत्यविंदद्यथाविधि ॥ ८५८

सोऽहमिंद्रस्य वचनान्नियोगादर्जुनस्य च ।
रक्षमाणो भयेभ्यस्त्वां चरिष्यामि त्वया सह ॥ ८५९
द्विस्तीर्थानि मया पूर्वं दृष्टानि कुरुनंदन ।
इदं तृतीयं द्रक्ष्यामि तान्येव भवता सह ॥ ८६०
इयं राजर्षिभिर्याता पुण्यकृद्भिर्युधिष्ठिर ।
मन्वादिभिर्महाराज तीर्थयात्रा भयापहा ॥ ८६१
त्वं तु धर्ममतिर्नित्यं धर्मज्ञः सत्यसंगरः ।
विमुक्तः सर्वसंगेभ्यो भूय एव भविष्यसि ॥ ८६२
युo उo न हर्षात्संप्रपश्यामि वाक्यस्यास्योत्तरं क्वचित् ।
भवता संगमो यस्य भ्राता चैव धनंजयः ॥ ८६३
वासवः स्मरते यस्य को नामाभ्यधिकस्ततः ।
यच्च मां भगवानाह तीर्थानां दर्शनं प्रति ॥ ८६४
धौम्यस्य वचनादेषा बुद्धिः पूर्वं कृतैव मे ।
ततः कुंतीसुतो राजा लघुभिर्ब्राह्मणैः सह ॥ ८६५
लोमशेन च सुप्रीतस्त्रिरात्रं काम्यकेऽवसत् ।
लोमशस्योपसंगृह्य पादौ द्वैपायनस्य च ॥ ८६६
धौम्येन सहिता वीरास्तथा तैर्वनवासिभिः ।
मार्गशीर्ष्यामतीतायां पुष्येण प्रययुस्ततः ॥ ८६७
कठिनानि समादाय चीराजिनजटाधराः ।
अभेद्यैः कवचैर्युक्तास्तीर्थान्यन्वचरंस्ततः ॥ ८६८
इंद्रसेनादिभिर्भृत्यै रथैः परिचतुर्दशैः ।
महानसव्यापृतैश्च तथान्यैः परिचारकैः ॥ ८६९
सायुधा बद्धनिस्त्रिंशास्तूणवंतः समार्गणाः ।
प्राङ्मुखाः प्रययुर्वीराः पांडवा जनमेजय ॥ ८७०
ते तथा सहिता वीरा वसंतस्तत्र तत्र ह ।
क्रमेण पृथवीपाल नैमिषारण्यमागताः ॥ ८७१
ततस्तीर्थेषु पुण्येषु गोमत्याः पांडवा नृप ।
कृताभिषेकाः प्रददुर्गाश्च वित्तं च भारत ॥ ८७२
कन्यातीर्थेऽश्वतीर्थे च गवां तीर्थे च भारत ।
कालकोट्यां विषप्रस्थे गिरावुष्य च कौरवाः ॥ ८७३

बाहुदायां महीपाल चक्रुः सर्वेऽभिषेचनम् ।
प्रयागे देवयजने देवानां पृथिवीपते ॥ ८७४
गंगायमुनयोश्चैव संगमे सत्यसंगराः ।
तपस्विजनजुष्टां च ततो वेदीं प्रजापतेः ॥ ८७५
जग्मुः पांडुसुता राजन्ब्राह्मणैः सह भारत ।
ततो महीधरं जग्मुर्धर्मज्ञेनाभिसंस्कृतम् ॥ ८७६
नगो गयशिरो यत्र पुण्या चैव महानदी ।
ऋषिजुष्टं सुपुण्यं तत्तीर्थं ब्रह्मसरोत्तमम् ॥ ८७७
अगस्त्यो भगवान्यत्र गतो वैवस्वतं प्रति ।
ऋषियज्ञेन महता यत्राक्षयवटो महान् ॥ ८७८
लो० उ० एषा भागीरथी पुण्या देवगंधर्वसेविता ।
वातेरिता पताकेव विराजति नभस्तले ॥ ८७९
भृगोस्तीर्थं महाराज महर्षिगणसेवितम् ।
यत्रोपस्पृष्टवान् रामो हृतं तेजस्तदाप्तवान् ॥ ८८०
ततः प्रयातः कौंतेयः क्रमेण भरतर्षभ ।
नंदामपरनंदां च नद्यौ पापभयापहे ॥ ८८१
पर्वतं स समासाद्य हेमकूटमनामयम् ।
अचिंत्यानद्भुतान्भावान्ददर्श सुबहून्नृपः ॥ ८८२
ततस्तत्र समाप्लुत्य गात्राणि सगणो नृपः ।
जगाम कौशिकीं पुण्यां रम्यां शीतजलां शुभाम् ॥ ८८३
लो० उ० विश्वामित्राश्रमो रम्य एष चात्र प्रकाशते ।
आश्रमश्चैव पुण्याख्यः काश्यपस्य महात्मनः ॥ ८८४
ऋष्यश्रृंगः सुतो यस्य तपस्वी संयतेंद्रियः ।
तपसो यः प्रभावेन वर्षयामास वासवम् ॥ ८८५
ततः प्रयातः कौशिक्याः पांडवो जनमेजय ।
आनुपूर्व्येण सर्वाणि जगामायतनान्यथ ॥ ८८६
स सागरं समासाद्य गंगायाः संगमे नृप ।
नदीशतानां पंचानां मध्ये चक्रे समाप्लवम् ॥ ८८७
ततः समुद्रतीरेण जगाम वसुधाधिपः ।
भ्रातृभिः सहितो वीरः कलिंगान् प्रति भारत ॥ ८८८

ततो वैतरणीं सर्वे पांडवा द्रौपदी तथा ।
अवतीर्य महाभागास्तर्पयांचक्रिरे पितॄन् ॥ ८८९
ततः कृतस्वस्त्ययनो महात्मा युधिष्ठिरः सागरमभ्यगच्छत् ।
कृत्वा च तच्छासनमस्य सर्वं महेंद्रमासाद्य निशामुवास ॥ ८९०
स वृत्तवांस्तेषु कृताभिषेकः सहानुजः पार्थिवपुत्रपौत्रः ।
समुद्रगां पुण्यतमां प्रशस्तां जगाम पारिक्षित पांडुपुत्रः ॥ ८९१
द्विजातिमुख्येषु धनं विसृज्य गोदावरीं सागरसभ्यगच्छत् ।
ततो विपाप्मा द्रविडेषु राजन् समुद्रमासाद्य च लोकपुण्यम् ॥ ८९२
अगस्त्यतीर्थं च महापवित्रं नारीतीर्थान्यथ वीरो ददर्श ।
स तानि तीर्थानि च सागरस्य पुण्यानि चान्यानि बहूनि राजन् ॥८९३
क्रमेण गच्छन् परिपूर्णकामः शूर्पारकं पुण्यतमं ददर्श ।
तत्रोदधेः कंचिदतीत्य देशं ख्यातं पृथिव्यां वनमाससाद ॥ ८९४
स तत्र तामभ्यधनुर्धरस्य वेदीं ददर्शायतपीनबाहुः ।
ऋचीकपुत्रस्य तपस्विसंघैः समावृतां पुण्यकृदर्चनीयाम् ॥ ८९५
स तेन तीर्थेन तु सागरस्य पुनः प्रयातः सह सोदरीयैः ।
द्विजैः पृथिव्यां प्रथितं महद्भिस्तीर्थं प्रभासं समुपाजगाम ॥ ८९६
तौ सर्ववृष्णिप्रवरौ ससैन्यौ युधिष्ठिरं जग्मतुराजमीढम् ।
ते वृष्णयः पांडुसुतान्समीक्ष्य भूमौ शयानान्मलदिग्धगात्रान् ॥ ८९७
अनर्हतीं द्रौपदीं चापि दृष्ट्वा सुदुःखिताश्रुकुशुरार्तनादम् ।
विसृज्य कृष्णां त्वथ धर्मराजो विदर्भराजोपचितां सुतीर्थाम् ।
जगाम पुण्यां सरितं पयोष्णीं सभ्रातृभृत्यः सह लोमशेन ॥ ८९८

---

## १८

बै० उ० स पयोष्ण्यां नरश्रेष्ठः स्नात्वा वै भ्रातृभिः सह ।
वैडूर्यपर्वतं चैव नर्मदां च महानदीम् ॥
समागमत तेजस्वी भ्रातृभिः सहितोऽनघ ॥ ८९९
लो० उ० सैंधवारण्यमासाद्य कुल्यानां कुरु दर्शनम् ।
पुष्करेषु महाराज सर्वेषु च जलं स्पृश ॥ ९००
आर्चीकपर्वतश्चैव निवासो वै मनीषिणाम् ।
चैत्याश्चैते बहुविधास्त्रिदशानां युधिष्ठिर ॥ ९०१

यमुना चाक्षयस्रोताः कृष्णश्चेह तपोरतः ।
अत्र राजा महेष्वासो मांधाताऽयजत स्वयम् ॥ १०२

एषा सरस्वती रम्या दिव्या चौघवती नदी ।
एतद्विनशनं नाम सरस्वत्या विशांपते ॥ १०३

द्वारं निषादराष्ट्रस्य येषां दोषात्सरस्वती ।
प्रविष्टा पृथिवीं वीर मा निषादा हि मां विदुः ॥ १०४

एष वै चमसोद्भेदो यत्र दृश्या सरस्वती ।
एतद्विष्णुपदं नाम दृश्यते तीर्थमुत्तमम् ॥ १०५

एषा रम्या विपाशा च नदी परमपावनी ।
काश्मीरमंडलं चैतत्सर्वपुण्यमरिंदम ॥ १०६

महर्षिभिश्चाध्युषितं पश्येदं भ्रातृभिः सह ।
एतद्द्वारं महाराज मानसस्य प्रकाशते ॥ १०७

एष वातिकखंडो वै प्रख्यातः सत्यविक्रमः ।
नात्यवर्तत यद्द्वारं विदेहादुत्तरं च यः ॥ १०८

ह्रदश्च कुशवानेष यत्र पद्मं कुशेशयम् ।
वितस्तां पश्य राजेंद्र सर्वपापप्रमोचनीम् ॥ १०९

महर्षिभिश्चाध्युषितां शीततोयां सुनिर्मलाम् ।
एषा मधुविला राजन् समंगा संप्रकाशते ॥ ११०

एतत्कर्दमिलं नाम भरतस्याभिषेचनम् ।
एते कनखला राजन्नृषीणां दयिता नगाः ॥ १११

एषा प्रकाशते गंगा युधिष्ठिर महानदी ।
उशीरबीजं मैनाकं गिरिश्वेतं च भारत ॥ ११२

समतीतोऽसि कौंतेय कालशैलं च पार्थिव ।
एषा गंगा सप्तविधा राजते भरतर्षभ ॥ ११३

स्थानं विरजसं पुण्यं यत्राग्निर्नित्यमिध्यते ।
एतद्वै मानुषेनाद्य न शक्यं द्रष्टुमद्भुतम् ॥ ११४

श्वेतं गिरिं प्रवेक्ष्यामो मंदरं चैव पर्वतम् ।
यत्र मणिवरो यक्षः कुबेरश्चैव यक्षराट् ॥ ११५

दुर्गमाः पर्वताः पार्थ समाधिं परमं कुरु ।
एतद्विकीर्णं सुश्रीमत् कैलासशिखरोपमम् ॥ ११६

यत्पश्यसि नरश्रेष्ठ पर्वतप्रतिमं स्थितम् ।
एतान्यस्थीनि दैत्यस्य नरकस्य महात्मनः ॥ ९१७
पुरातनेन देवेन विष्णुना परमात्मना ।
दैत्यो विनिहतस्तात सुरराजहितैषिणा ॥ ९१८
ते शूरास्ततधन्वानस्तूणवंतः समार्गणाः ।
बद्धगोधांगुलित्राणाः खड्गवंतोऽमितौजसः ॥ ९१९
परिगृह्य द्विजश्रेष्ठान् ज्येष्ठाः सर्वधनुष्मताम् ।
पांचालीसहिता राजन् प्रययुर्गंधमादनम् ॥ ९२०
सरांसि सरितश्चैव पर्वतांश्च वनानि च ।
वृक्षांश्च बहुलच्छायान् ददृशुर्गिरिमूर्धनि ॥ ९२१
चेरुरुच्चावचाकारान् देशान्विषमसंकटान् ।
पश्यंतो मृगजातानि बहूनि विविधानि च ॥ ९२२
प्रविशत्स्वथ वीरेषु पर्वतं गंधमादनम् ।
चंडवातं महद्वर्षं प्रादुरासीद्विशांपते ॥ ९२३
ततो रेणुः समुद्भूतः सपत्रबहुलो महान् ।
पृथिवीं चांतरिक्षं च द्यां चैव सहसाऽऽवृणोत् ॥ ९२४
न चापि शेकुस्तत्कर्तुमन्योन्यस्याभिभाषणम् ।
न चापश्यंस्ततोऽन्योन्यं तमसावृतचक्षुषः ॥ ९२५
आकृष्यमाणा वातेन साश्मचूर्णेन भारत ।
द्रुमाणां वातभग्नानां पततां भूतलेऽनिशम् ॥ ९२६
अन्येषां च महीजानां शब्दः समभवन्महान् ।
द्यौः स्वित्पतति किं भूमिर्दीर्यते पर्वतो नु किम् ॥ ९२७
इति ते मेनिरे सर्वे पवनेनापि मोहिताः ।
ते पथानंतरान्वृक्षान् वल्मीकान्विषमाणि च ॥ ९२८
पाणिभिः परिमार्गंतो भीता वायोर्निलिल्यिरे ।
ततः कार्मुकमादाय भीमसेनो महाबलः ॥ ९२९
कृष्णामादाय संगम्य तस्थावाश्रित्य पादपम् ।
मंदीभूते तु पवने तस्मिन्रजसि शाम्यति ॥ ९३०
महद्भिर्जलधारौघैर्वर्षमभ्याजगाम ह ।
भृशं चटचटाशब्दो वज्राणां क्षिप्यतामिव ॥ ९३१

ततस्ताश्चंचलाभासश्चेरुरभ्रेषु विद्युतः ।
ततोऽश्मसहिता धारा संवृण्वत्यः समंततः ॥ १३२
प्रपेतुरनिशं तत्र शीघ्रवातसमीरिताः ।
तत्र सागरगा ह्यापः कीर्यमाणाः समंततः ॥ १३३
प्रादुरासन्सकलुषाः फेनवत्यो विशांपते ।
वहंत्यो वारि बहुलं फेनोडुपपरिप्लुतम् ॥ १३४
परिसस्रुर्महाशब्दाः प्रकर्षंत्यो महीरुहान् ।
तस्मिन्नुपरते शब्दे वाते च समतां गते ॥ १३५
गते ह्यंभसि निम्नानि प्रादुर्भूते दिवाकरे ।
निर्जग्मुस्ते शनैः सर्वे समाजग्मुश्च भारत ॥ १३६
प्रतस्थिरे पुनर्वीराः पर्वतं गंधमादनम् ।
क्रोशमात्रं प्रयातेषु पांडवेषु महात्मसु ॥ १३७
पद्भ्यामनुचिता गंतुं द्रौपदी समुपाविशत् ।
श्रांता दुःखपरीता च वातवर्षेण तेन च ॥ १३८
सौकुमार्याच्च पांचाली संमुमोह तपस्विनी ।
तां पतंतीं वरारोहां भज्यमानां लतामिव ॥ १३९
नकुलः समभिद्रुत्य परिजग्राह वीर्यवान् ।
तामवेक्ष्य तु कौंतेयो विवर्णवदनां कृशाम् ॥ १४०
अंकमानीय धर्मात्मा पर्यदेवयदातुरः ।
कथं वेश्मसु गुप्तेषु स्वास्तीर्णशयनोचिता ॥ १४१
भूमौ निपतिता शेते सुखार्हा वरवर्णिनी ।
सुकुमारौ कथं पादौ मुखं च कमलप्रभम् ॥ १४२
मत्कृतेऽद्य वरार्हायाः श्यामतां समुपागतम् ।
किमिदं द्यूतकामेन मया कृतमबुद्धिना ॥ १४३
आदाय कृष्णां चरता वने मृगगणायुते ।
सुखं प्राप्स्यसि कल्याणि पांडवान् प्राप्य वै पतीन् ॥ १४४
इति द्रुपदराजेन पित्रा दत्तायतेक्षणा ।
तत्सर्वमनवाप्येयं श्रमशोकाध्वकर्शिता ॥ १४५
शेते निपतिता भूमौ पापस्य मम कर्मभिः ।
तथा लालप्यमाने तु धर्मराजे युधिष्ठिरे ॥ १४६

धौम्यप्रभृतयः सर्वे तत्राजग्मुर्द्विजोत्तमाः ।
ते समाश्वासयामासुराशीर्भिश्चाप्यपूजयन् ॥ ९४७
रक्षोघ्नांश्च तथा मंत्रान् जेपुश्चक्रुश्च ते क्रियाः ।
स्पृश्यमाना करैः शीतैः पांडवैश्च मुहुर्मुहुः ॥ ९४८
सेव्यमाना च शीतेन जलमिश्रेण वायुना ।
पांचाली सुखमासाद्य लेभे चेतः शनैः शनैः ॥ ९४९
परिगृह्य च तां दीनां कृष्णामजिनसंस्तरे ।
पार्था विश्रामयामासुर्लब्धसंज्ञां तपस्विनीम् ॥ ९५०
उवाच च कुरुश्रेष्ठो भीमसेनमिदं वचः ।
बह्वः पर्वता भीम विषमा हिमदुर्गमाः ॥ ९५१
तेषु कृष्णा महाबाहो कथं नु विचरिष्यति ।
भी० उ० त्वां राजन् राजपुत्रीं च यमौ च पुरुषर्षभ ॥ ९५२
स्वयं नेष्यामि राजेंद्र मा विषादे मनः कृथाः ।
हैडिंबश्च महावीर्यो विहगो मद्बलोपमः ॥ ९५३
वहेदनघ सर्वान्नो वचनात्ते घटोत्कचः ।
भ्रातुर्वचनमाज्ञाय भीमसेनो घटोत्कचम् ॥ ९५४
आदिदेश नरव्याघ्रस्तनयं शत्रुकर्शनम् ।
ते त्वाशुगतिभिर्वीरा राक्षसैस्तैर्महाजवैः ॥ ९५५
उह्यमाना ययुः शीघ्रं महद्ध्वानमल्पवत् ।
तेऽवतीर्य बहून् देशानुत्तरांश्च कुरूनपि ॥ ९५६
ददृशुर्विविधाश्चर्यं कैलासं पर्वतोत्तमम् ।
तस्याभ्याशे तु ददृशुर्नरनारायणाश्रमम् ॥ ९५७
ददृशुस्तां च बदरीं वृत्तस्कंधां मनोरमाम् ।
स्निग्धामविरलच्छायां श्रिया परमया युताम् ॥ ९५८
तामुपेत्य महात्मानः सह तैर्ब्राह्मणर्षभैः ।
अवतेरुस्ततः सर्वे राक्षसस्कंधतः शनैः ॥ ९५९
तमसा रहितं पुण्यमनामृष्टं रवेः करैः ।
क्षुत्तृड्शीतोष्णदोषैश्च वर्जितं शोकनाशनम् ॥ ९६०
तत्र ते पुरुषव्याघ्राः परमं शौचमास्थिताः ।
षड्रात्रमवसन् वीरा धनंजयदिदृक्षवः ॥ ९६१

---

## १९

ततः किंपुरुषावासं सिद्धचारणसेवितम् ।
ददृशुर्हृष्टरोमाणः पर्वतं गंधमादनम् ॥ ९६२
विविशुः क्रमशो वीराः शरण्यं शुभकाननम् ।
शृण्वंतः प्रीतिजननान् वल्गून् मदकलान् शुभान् ॥ ९६३
श्रोत्ररम्यान् सुमधुरान् शब्दान्खगमुखेरितान् ।
सर्वर्तुफलभाराढ्यान् सर्वर्तुकुसुमोज्वलान् ॥ ९६४
पश्यंतः पादपांश्चापि फलभारावनामितान् ।
सरांसि च मनोज्ञानि समंताज्जलचारिभिः ॥ ९६५
कुमुदैः पुंडरीकैश्च तथा कोकनदोत्पलैः ।
हृष्टैस्तथा तामरसरसासवमदालसैः ॥ ९६६
पद्मोदरच्युतरजःकिंजल्कारुणरंजितैः ।
मंजुस्वरैर्मधुकरैर्विरुतान्कमलाकरान् ॥ ९६७
अपश्यंस्ते नरव्याघ्रा गंधमादनसानुषु ।
तथैव पद्मखंडैश्च मंडितांश्च समंततः ॥ ९६८
शिखंडिनीभिः सहितांल्लतामंडलकेषु च ।
मेघतूर्यरवोद्दाममदनाकुलितान्भृशम् ॥ ९६९
कृत्वैव केकामधुरं संगीतं मधुरस्वरम् ।
चित्रान्कलापान्विस्तीर्य सविलासान्मदालसान् ॥ ९७०
मयूरान्ददृशुर्हृष्टान्नृत्यतो वनलालसान् ।
विवरेषु तरूणां च रुचिरं ददृशुश्च ते ॥ ९७१
सिंधुवारांस्तथोदारान् मन्मथस्येव तोमरान् ।
सुवर्णवर्णकुसुमान् गिरीणां शिखरेषु च ॥ ९७२
कर्णिकारान्विकसितान् कर्णपूरानिवोत्तमान् ।
तथैव वनराजीनामुदारान्रचितानिव ॥ ९७३
विराजमानांस्ते पश्यंस्तिलकांस्तिलकानिव ।
कमलोत्पलकह्लारपुंडरीकसुगंधिना ॥ ९७४
सेव्यमाना वने तस्मिन् सुखस्पर्शेन वायुना ।
ततो युधिष्ठिरो भीममाहेदं प्रीतिमद्वचः ॥ ९७५
अहो श्रीमदिदं भीम गंधमादनकाननम् ।
भ्रमरारावमधुरा नलिनीः फुल्लपंकजाः ॥ ९७६

विलोड्यमानाः पश्येमाः करिभिः सकरेणुभिः ।
पश्य भीम शुभान्देशान् देवाक्रीडान्समंततः ।
पत्रिणः पुष्पितानेतान् संपतंति महाद्रुमान् ॥ ९७७
रक्तपीतारुणाः पार्थ पादपाग्रगताः खगाः ।
वदंति मधुरा वाचः सर्वभूतमनोरमाः ॥ ९७८
बहुतालसमुत्सेधाः शैलशृंगपरिच्युताः ।
नानाप्रस्रवणेभ्यश्च वारिधाराः पतंति च ॥ ९७९
शोभयंति महाशैलं नानारजतधातवः ।
क्वचिदंजनवर्णाभाः क्वचित्कांचनसन्निभाः ॥ ९८०
धातवो हरितालस्य क्वचिद्धिंगुलकस्य च ।
मनःशिलागुहाश्चैव संध्याभ्रनिकरोपमाः ॥ ९८१
गंधर्वाः सह कांताभिर्यथोक्तं वृषपर्वणा ।
दृश्यंते शैलशृंगेषु पार्थ किंपुरुषैः सह ॥ ९८२
गीतानां समतालानां तथा साम्नां च निस्वनः ।
श्रूयते बहुधा भीम सर्वभूतमनोहरः ॥ ९८३
महागंगामुदीक्षस्व पुण्यां देवनदीं शुभाम् ।
कलहंसगणैर्जुष्टामृषिकिंनरसेविताम् ॥ ९८४
ते प्रीतमनसः शूराः प्राप्ता गतिमनुत्तमाम् ।
नातृप्यन्पर्वतेंद्रस्य दर्शनेन परंतपाः ॥ ९८५
उपेतमथ माल्यैश्च फलवद्भिश्च पादपैः ।
आर्ष्टिषेणस्य राजर्षेराश्रमं ददृशुस्तदा ॥ ९८६
ततः कदाचिद्धरिसंप्रयुक्तं महेंद्रबाहुं सहसोपयातम् ।
विद्युत्प्रभं प्रेक्ष्य महारथानां हर्षोऽर्जुनं चिंतयतां बभूव ॥ ९८७
बभूव तेषां परमप्रहर्षस्तेनाप्रमेयेण समागतानाम् ।
स चापि तान्प्रेक्ष्य किरीटमाली ननंद राजानमभिप्रशंसन् ॥ ९८८

---

## २०.

ततो रजन्यां व्युष्टायां धर्मराजं युधिष्ठिरम् ।
भ्रातृभिः सहितः सर्वैरवंदत धनंजयः ॥ ९८९
कृष्णया चैव बीभत्सुर्धर्मपुत्रमपूजयत् ।
अभिवादयमानं तं मूर्ध्न्युपाघ्राय पांडवं ॥ ९९०

हर्षगद्गदया वाचा प्रहृष्टोऽर्जुनमब्रवीत् ।
कथमर्जुन कालोऽयं स्वर्गे व्यतिगतस्तव ॥ ९९१
कथं चास्त्राण्यवाप्तानि देवराजश्च तोषितः ।
अ० उ० शृणु हंत महाराज विधिना येन दृष्टवान् ॥ ९९२
शतक्रतुमहं देवं भगवंतं च शंकरम् ।
विद्यामधीत्य तां राजंस्त्वयोक्तामरिमर्दन ॥ ९९३
भवता च समादिष्टस्तपसे प्रस्थितो वनम् ।
तपोऽतप्यं महाराज मासं मूलफलाशनः ॥ ९९४
द्वितीयश्चापि मे मासो जलं भक्षयतो गतः ।
निराहारस्तृतीयेऽथ मासे पांडवनंदन ॥ ९९५
ऊर्ध्वबाहुश्चतुर्थं तु मासमस्मि स्थितस्तदा ।
न च मे हीयते प्राणस्तदद्भुतमिवाभवत् ॥ ९९६
पंचमे त्वथ संप्राप्ते प्रथमे दिवसे गते ।
वराहसंस्थितं भूतं मत्समीपं समागतम् ॥ ९९७
निघ्नन्प्रोथेन पृथिवीं विलिखंश्चरणैरपि ।
अनु तस्यापरं भूतं महत्कैरातसंस्थितम् ॥ ९९८
धनुर्बाणासिमत्प्राप्तं स्त्रीगणानुगतं तदा ।
ततोऽहं धनुरादाय तथाक्षय्ये महेषुधी ॥ ९९९
अताडयं शरेणाथ तद्भूतं लोमहर्षणम् ।
युगपत्तं किरातस्तु विकृष्य बलवद्धनुः ॥ १०००
अभ्याजघ्ने दृढतरं कंपयन्निव मे मनः ।
स तु मामब्रवीद्राजन् मम पूर्वपरिग्रहः ॥ १००१
मृगयाधर्ममुत्सृज्य किमर्थं ताडितस्त्वया ।
एष ते निशितैर्बाणैर्दर्पं हन्मि स्थिरो भव ॥ १००२
ततो गिरिमिवात्यर्थमावृणोन्मां महाशरैः ।
तं चाहं शरवर्षेण महता समवाकिरम् ॥ १००३
ततः शरैर्दीप्तमुखैर्यंत्रितैरनुमंत्रितैः ।
प्रत्यविध्यमहं तं तु वज्रैरिव शिलोच्चयम् ॥ १००४
तस्य तच्छतधा रूपमभवच्च सहस्रधा ।
तानि चास्य शरीराणि शरैरहमताडयम् ॥ १००५

यदाभिभवितुं बाणैर्न च शक्नोमि तं रणे ।
ततो महास्त्रमातिष्ठं वायव्यं भरतर्षभ ॥ १००६
न चैनमशकं हंतुं तदद्भुतमिवाऽभवत् ।
तस्मिन्प्रतिहते चास्त्रे विस्मयो मे महानभूत् ॥ १००७
भूय एव महाराज सविशेषमहं ततः ।
अस्त्रपूगेन महता रणे भूतमवाकिरम् ॥ १००८
स्थूणाकर्णमथो जालं शरवर्षमथोल्बणम् ।
शलभास्त्रमश्मवर्षं समास्थायाहमभ्ययाम् ॥ १००९
जग्रास प्रसभं तानि सर्वाण्यस्त्राणि मे नृप ।
तेषु सर्वेषु जग्धेषु ब्रह्मास्त्रमहमादिशम् ॥ १०१०
तदप्यस्त्रं महातेजाः क्षणेनैव व्यशातयत् ।
ब्रह्मास्त्रे तु हते राजन्भयं मां महदाविशत् ॥ १०११
हतेष्वस्त्रेषु सर्वेषु भक्षितेष्वायुधेषु च ।
मम तस्य च भूतस्य बाहुयुद्धमवर्तत ॥ १०१२
व्यायामं मुष्टिभिः कृत्वा तलैरपि समागतैः ।
अपारयंश्च तद्भूतं निश्चेष्टमगमं महीम् ॥ १०१३
ततः प्रहस्य तद्भूतं तत्रैवांतरधीयत ।
सह स्त्रीभिर्महाराज पश्यतो मेऽद्भुतोपमम् ॥ १०१४
एवं कृत्वा स भगवांस्ततोऽन्यद्रूपमास्थितः ।
दिव्यमेव महाराज वसानोऽद्भुतमंबरम् ॥ १०१५
हित्वा किरातरूपं च भगवांस्त्रिदशेश्वरः ।
स्वरूपं दिव्यमास्थाय तस्थौ तत्र महेश्वरः ॥ १०१६
अदृश्यत ततः साक्षाद् भगवान्गोवृषध्वजः ।
उमासहायो व्यालधृक् बहुरूपः पिनाकधृक् ॥ १०१७
स मामभ्येत्य समरे तथैवाभिमुखं स्थितम् ।
शूलपाणिरथोवाच तुष्टोऽस्मीति परंतप ॥ १०१८
अस्त्राणीच्छाम्यहं ज्ञातुं यानि देवेषु कानिचित् ।
ददानीत्येव भगवानब्रवीत्र्यंबकश्च माम् ॥ १०१९
प्रददौ च मम प्रीतः सोऽस्त्रं पाशुपतं महत् ।
उवाच च महादेवो दत्वा मेऽस्त्रं सनातनम् ॥ १०२०

न प्रयोज्यं भवेदेतन्मानुषेषु कथंचन ।
जगद्विनिर्दहेदेवमल्पतेजसि पातितम् ॥ १०२१
पीड्यमानेन बलवत्प्रयोज्यं स्याद्धनंजय ।
तदप्रतिहतं दिव्यं सर्वास्त्रप्रतिषेधनम् ॥ १०२२
मूर्तिमन्मे स्थितं पार्श्वे प्रसन्ने गोवृषध्वजे ।
उत्सादनममित्राणां परसेनानिकर्तनम् ॥ १०२३
दुरासदं दुष्प्रसहं सुरदानवराक्षसैः ।
अनुज्ञातस्त्वहं तेन तत्रैव समुपाविशम् ॥ १०२४
प्रेक्षतश्चैव मे देवस्तत्रैवांतरधीयत ।
ततो मरुत्वान् हरिभिर्युक्तैर्वाहैः स्वलंकृतैः ॥ १०२५
शचीसहायस्तत्रायात्सहसर्वैस्तदामरैः ।
एतस्मिन्नेव काले तु कुबेरो नरवाहनः ॥ १०२६
दर्शयामास मां राजन् लक्ष्म्या परमया युतः ।
दक्षिणस्यां दिशि यमं प्रत्यपश्यं व्यवस्थितम् ॥ १०२७
वरुणं देवराजं च यथास्थानमवस्थितम् ।
ते मामूचुर्महाराज सांत्वयित्वा नरर्षभ ॥ १०२८
सव्यसाचिन्निरीक्षास्माँल्लोकपालानवस्थितान् ।
सुरकार्यार्थसिद्ध्यर्थं दृष्टवानसि शंकरम् ॥ १०२९
अस्मत्तोऽपि गृहाण त्वमस्त्राणीति समंततः ।
ततोऽहं प्रयतो भूत्वा प्रणिपत्य सुरर्षभान् ॥ १०३०
प्रत्यगृह्णं तदास्त्राणि महान्ति विधिवद्विभो ।
मघवानपि देवेशो रथमारुह्य सुप्रभम् ॥ १०३१
उवाच भगवान् स्वर्गं गंतव्यं फाल्गुन त्वया ।
त्वया हि तीर्थेषु पुरा समाप्लावः कृतोऽसकृत् ॥ १०३२
तपश्चेदं महत्तप्तं स्वर्गं गंतासि पांडव ।
मातलिर्मन्नियोगात्त्वां त्रिदिवं प्रापयिष्यति ॥ १०३३
विदितस्त्वं हि देवानां मुनीनां च महात्मनाम् ।
अथापश्यं हरियुजं रथमैंद्रमुपस्थितम् ॥ १०३४
दिव्यं मायामयं पुण्यं यत्र मातलिना नृप ।
लोकपालेषु यातेषु मामुवाचाथ मातलिः ॥ १०३५

द्रष्टुमिच्छति शक्रस्त्वां देवराजो महाद्युते ।
ततः शक्रस्य भवनमपश्यममरावतीम् ॥ १०३६
दिव्यैः कामफलैर्वृक्षै रत्नैश्च समलंकृताम् ।
न तत्र सूर्यस्तपति न शीतोष्णे न च क्लमः ॥ १०३७
न बाधते तत्र रजस्तत्रास्ति न जरा नृप ।
न तत्र शोको दैन्यं वा दौर्बल्यं चोपलक्ष्यते ॥ १०३८
न क्रोधलोभौ तत्रास्तां सुरादीनां विशांपते ।
नित्यपुष्पफलास्तत्र पादपा हरितच्छदाः ॥ १०३९
पुष्करिण्यश्च विविधाः पद्मसौगंधिकायुताः ।
शीतस्तत्र ववौ वायुः सुगंधी जीवनः शुचिः ॥ १०४०
सर्वरत्नविचित्रा च भूमिः पुष्पविभूषिता ।
विमानगामिनश्चात्र दृश्यंते बहवोऽम्बरे ॥ १०४१
ततोऽपश्यं वसून्रुद्रान् साध्यांश्च समरुद्गणान् ।
आदित्यानश्विनौ चैव तान्सर्वान्प्रत्यपूजयम् ॥ १०४२
प्रविश्य तां पुरीं दिव्यां देवगंधर्वपूजिताम् ।
देवराजं सहस्राक्षमुपातिष्ठं कृतांजलिः ॥ १०४३
ददावर्धासनं प्रीतः शक्रो मे ददतां वरः ।
तत्राहं देवगंधर्वैः सहितो भूरिदक्षिणैः ॥ १०४४
अस्त्रार्थमवसं स्वर्गे शिक्षाणोऽस्त्राणि भारत ।
विश्वावसोश्च वै पुत्रश्चित्रसेनोऽभवत्सखा ॥ १०४५
स च गांधर्वमखिलं ग्राहयामास मां नृप ।
इदं च मे तनुत्राणं प्रायच्छन्मघवा प्रभुः । १०४६
अभेद्यं कवचं दिव्यं स्रजं चैव हिरण्मयीम् ।
देवदत्तं च मे शंखं पुनः प्रादान्महारवम् ॥ १०४७
दिव्यं चेदं किरीटं मे स्वयमिंद्रो युयोज ह ।
एवं संपूजितस्तत्र सुखमस्म्युषितो नृप ॥ १०४८
इंद्रस्य भवने पुण्ये गंधर्वशिशुभिः सह ।
ततो मामब्रवीच्छक्रः प्रीतिमानमरैः सह ॥ १०४९
समयोऽर्जुन गंतुं ते भ्रातरो हि स्मरंति ते ।
एवमिंद्रस्य भवने पंच वर्षाणि भारत ॥ १०५०

उषितानि मया राजन् स्मरता द्यूतजं कलिम् ।
ततो भवंतमद्राक्षं भ्रातृभिः परिवारितम् ॥ १०५१
गंधमादनपादस्य पर्वतस्यास्य मूर्धनि ।
यु० उ० दिष्ट्या धनंजयास्त्राणि त्वया प्राप्तानि भारत ॥ १०५२
दिष्ट्या चाराधितो राजा देवानामीश्वरः प्रभुः ।
दिष्ट्या च भगवान्स्थाणुर्देव्या सह परंतप ॥ १०५३
साक्षाद्दृष्टः स्वयुद्धेन तोषितश्च त्वयानघ ।
दिष्ट्या च लोकपालैस्त्वं समेतो भरतर्षभ ॥ १०५४
दिष्ट्या वर्द्धामहे पार्थ दिष्ट्यासि पुनरागतः ।
अद्य कृत्स्नां महीं देवीं विजितां पुरमालिनीम् ॥ १०५५
मन्ये च धृतराष्ट्रस्य पुत्रानपि वशीकृतान् ।
बह्वाश्चर्ये वने तेषां वसतामुग्रधन्वनाम् ॥ १०५६
प्राप्तानामाश्रमं राजन् राजर्षेर्वृषपर्वणः ।
यदृच्छया धनुष्पाणिर्बद्धखड्गो वृकोदरः ॥ १०५७
ददर्श तद्वनं रम्यं देवगंधर्वसेवितम् ।
स तत्र मनुजव्याघ्रो वने वनचरोपमः ॥ १०५८
पन्नगमपि समापेदे भीमसेनो महाबलः ।
स ददर्श महाकायं भुजंगं लोमहर्षणम् ॥ १०५९
गिरिदुर्गे समापन्नं कायेनावृत्य कंदरम् ।
पर्वताभोगवर्ष्माणमतिकायं महाबलम् ॥ १०६०
चित्रांगमंगजैश्चित्रैर्हरिद्रासदृशच्छविम् ।
गुहाकारेण वक्त्रेण चतुर्दंष्ट्रेण राजता ॥ १०६१
दीप्ताक्षेणातिताम्रेण लिहानं सृक्किणी मुहुः ।
त्रासनं सर्वभूतानां कालांतकयमोपमम् ॥ १०६२
निश्वासक्ष्वेडनादेन भर्त्सयंतमिव स्थितम् ।
स भीमं सहसाऽभ्येत्य पृदाकुः कुपितो भृशम् ॥ १०६३
जग्राहाजगरो ग्राहो भुजयोरुभयोर्बलात् ।
तेन संस्पृष्टगात्रस्य भीमसेनस्य वै तदा ॥ १०६४
संज्ञा मुमोह सहसा वरदानेन तस्य हि ।
विस्फुरन्शनकैर्भीमो न शशाक विचेष्टितुम् ॥ १०६५

नागायुतसमप्राणः सिंहस्कंधो महाभुजः ।
निगृह्यैनं महाबाहुं ततः स भुजगस्तदा ॥ १०६६
विमुच्यास्य भुजौ पीनाविदं वचनमब्रवीत् ।
दिष्टस्त्वं क्षुधितस्याद्य देवैर्भक्ष्यो महाभुज ॥ १०६७
दिष्ट्या कालस्य महतः प्रियाः प्राणा हि देहिनाम् ।
नहुषो नाम राजर्षिर्व्यक्तं ते श्रोत्रमागतः ॥ १०६८
तवैव पूर्वः पूर्वेषामायोर्वंशधरः सुतः ।
सोऽहं शापादगस्त्यस्य ब्राह्मणानवमन्य च ॥ १०६९
इमामवस्थामापन्नः पश्य दैवमिदं मम ।
न हि मे मुच्यते कश्चित्कथंचित्प्रग्रहं गतः ॥ १०७०
गजो वा महिषो वापि षष्ठे काले नरोत्तम ।
तमुवाच महाबाहुर्भीमसेनो भुजंगमम् ॥ १०७१
न च कुप्ये महासर्प न चात्मानं विगर्हये ।
दैवं पुरुषकारेण को वंचयितुमर्हति ॥ १०७२
दैवमेव परं मन्ये पुरुषार्थो निरर्थकः ।
किंतु नाद्यानुशोचामि तथात्मानं विनाशितम् ॥ १०७३
यथा तु विपिने न्यस्तान्भ्रातॄन्राज्यपरिच्युतान् ।
विनष्टमथ मां श्रुत्वा भविष्यंति निरुद्यमाः ॥ १०७४
मातरं चैव शोचामि कृपणां पुत्रगृद्धिनीम् ।
एवंविधं बहु तदा विललाप वृकोदरः ॥ १०७५
भुजंगभोगसंरुद्धो नाशकच्च विचेष्टितुम् ।
युधिष्ठिरस्तु कौंतेयो बभूवास्वस्थचेतनः ॥ १०७६
अनिष्टदर्शनान्घोरानुत्पातान्परिचिंतयन् ।
धर्मराजोऽपि मेधावी मन्यमानो महद्भयम् ॥ १०७७
द्रौपदीं परिपप्रच्छ क्व भीम इति भारत ।
शशंस तस्मै पांचाली चिरयातं वृकोदरम् ॥ १०७८
स प्राचीं दिशमास्थाय महतो गजयूथपान् ।
ददर्श पृथिवीं चिह्नैर्भीमस्य परिचिह्निताम् ॥ १०७९
स गत्वा तैस्तदा चिह्नैर्ददर्श गिरिगह्वरे ।
ईरिणे निर्जले देशे कंटकिद्रुमसंकुले ॥ १०८०

गृहीतं भुजगेंद्रेण निश्चेष्टमनुजं तदा ।
भी० उ० अयमार्य महासत्वो भक्ष्यार्थं मां गृहीतवान् ॥ १०८१
नहुषो नाम राजर्षिः प्राणवानिव संस्थितः ।
यु० उ० मुच्यतामयमायुष्मन् भ्राता मेऽमितविक्रमः ॥ १०८२
वयमाहारमन्यं ते दास्यामः क्षुन्निवारणम् ।
अ० उ० व्रतमेतन्महाबाहो विषयं मम यो व्रजेत् ॥ १०८३
स मे भक्ष्यो भवेत्तात त्वं चापि विषये मम ।
प्रश्नानुच्चरितानद्य व्याहरिष्यसि चेन्मम ॥ १०८४
अथ पश्चाद्विमोक्ष्यामि भ्रातरं ते वृकोदरम् ।
यु० उ० ब्रूहि सर्प यथाकामं प्रतिवक्ष्यामि ते वचः ॥ १०८५
अपि चेच्छक्नुयां प्रीतिमाहर्तुं ते भुजंगम ।
अ० उ० ब्राह्मणः को भवेद्राजन् वेद्यं किंच युधिष्ठिर ॥ १०८६
ब्रवीह्यतिमतिं त्वां हि वाक्यैरनुमिमीमहे ।
यु० उ० सत्यं दानं क्षमाशीलमानृशंस्यं तपो घृणा ॥ १०८७
दृश्यंते यत्र नागेंद्र स ब्राह्मण इति स्मृतिः ।
वेद्यं सर्प परं ब्रह्म निर्दुःखमसुखं च यत् ॥ १०८८
यत्र गत्वा न शोचंति भवतः किं विवक्षितम् ।
अ० उ० चातुर्वर्ण्यं प्रमाणं च सत्यं च ब्रह्म चैव हि ॥ १०८९
शूद्रेष्वपि च सत्यं च दानमक्रोध एव च ॥
आनृशंस्यमहिंसा च घृणा चैव युधिष्ठिर ॥ १०९०
वेद्यं यच्चात्र निर्दुःखमसुखं च नराधिप ।
ताभ्यां हीनं पदं चान्यन्न तदस्तीति लक्षये ॥ १०९१
यु० उ० शूद्रे तु यद्भवेल्लक्ष्म द्विजे तच्च न विद्यते ।
न वै शूद्रो भवेच्छूद्रो ब्राह्मणो न च ब्राह्मणः ॥ १०९२
यत्रैतल्लक्ष्यते सर्प वृत्तं स ब्राह्मणः स्मृतः ।
यत्रैतन्न भवेत्सर्प तं शूद्रमिति निर्दिशेत् ॥ १०९३
यत्पुनर्भवता प्रोक्तं न वेद्यं विद्यतीति च ।
ताभ्यां हीनमतोऽन्यत्र पदं नास्तीति चेदपि ॥ १०९४
एवमेतन्मतं सर्प ताभ्यां हीनं न विद्यते ।
यथा शीतोष्णयोर्मध्ये भवेन्नोष्णं न शीतता ॥ १०९५

एवं वै सुखदुःखाभ्यां हीनं नास्ति पदं क्वचित् ।
एषा मम मतिः सर्प यथा वा मन्यते भवान् ॥ १०९६

अ० उ० यदि ते वृत्ततो राजन्ब्राह्मणः प्रसमीक्षितः ।
वृथा जातिस्तदायुष्मन्कृतिर्यावन्न विद्यते ॥ १०९७

यु० उ० जातिरत्र महासर्प मनुष्यत्वे महामते ।
संकरात्सर्ववर्णानां दुष्परीक्ष्येति मे मतिः ॥ १०९८

सर्वे सर्वास्वपत्यानि जनयंति सदा नराः ।
वाङ्मैथुनमथो जन्म मरणं च समं नृणाम् ॥ १०९९

इदमार्षं प्रमाणं च ये यजामह इत्यपि ।
तस्माच्छीलं प्रधानेष्टं विदुर्ये तत्त्वदर्शिनः ॥ ११००

प्राङ्नाभिवर्द्धनात्पुंसो जातकर्म विधीयते ।
तत्रास्य माता सावित्री पिता त्वाचार्य उच्यते ॥ ११०१

तावच्छूद्रसमो ह्येष यावद्वेदे न जायते ।
तस्मिन्नेवं मतिद्वैधे मनुः स्वायंभुवोऽब्रवीत् ॥ ११०२

कृतकृत्याः पुनर्वर्णा यदि वृत्तं न विद्यते ।
संकरस्तत्र नागेंद्र बलवान्प्रसमीक्षितः ॥ ११०३

यत्रेदानीं महासर्प संस्कृतं वृत्तमिष्यते ।
तं ब्राह्मणमहं पूर्वमुक्तवान्भुजगोत्तम ॥ ११०४

अ० उ० श्रुतं विदितवेद्यस्य तव वाक्यं युधिष्ठिर ।
भक्षयेयमहं कस्माद्भ्रातरं ते वृकोदरम् ॥ ११०५

यु० उ० भवानेतादृशो लोके वेदवेदांगपारगः ।
ब्रूहि किं कुर्वतः कर्म भवेद्गतिरनुत्तमा ॥ ११०६

अ० उ० पात्रे दत्वा प्रियाण्युक्त्वा सत्यमुक्त्वा च भारत ।
अहिंसानिरतः स्वर्गं गच्छेदिति मतिर्मम ॥ ११०७

स० उ० तिस्रो वै गतयो राजन् परिदिष्टाः स्वकर्मभिः ।
मानुष्यं स्वर्गवासश्च तिर्यग्योनिश्च तत्त्रिधा ॥ ११०८

तत्र वै मानुषाल्लोकाद्दानादिभिरतंद्रितः ।
अहिंसार्थसमायुक्तैः कारणैः स्वर्गमश्नुते ॥ ११०९

कामक्रोधसमायुक्तो हिंसालोभसमन्वितः ।
मनुष्यत्वात्परिभ्रष्टस्तिर्यग्योनौ प्रसूयते ॥ १११०

तिर्यग्योन्याः पृथग्भावो मनुष्यार्थे विधीयते ।
गवादिभ्यस्तथाऽश्वेभ्यो देवत्वमपि दृश्यते ॥ १११९
सोऽयमेता गतीस्तात जंतुश्चरति कार्यवान् ।
नित्ये महति चात्मानमवस्थापयते द्विजः ॥ १११२
जातौ जातश्च बलवान् भुंक्ते चात्मा सदेहवान् ।
फलार्थस्तात निस्पृक्तः प्रज्ञालक्षणभावनः ॥ १११३
यु० उ० मनसश्चापि बुद्धेश्च ब्रूहि मे लक्षणं परम् ।
एतदध्यात्मविदुषां परं कार्यं विधीयते ॥ १११४
बुद्धिरात्मानुगातीव उत्पातेन विधीयते ।
तदाश्रिता हि सा ज्ञेया बुद्धिस्तस्यैषिणी भवेत् ॥ १११५
बुद्धिरुत्पद्यते कार्यान्मनस्तूत्पन्नमेव हि ।
बुद्धेर्गुणविधिर्नास्ति मनस्तद्गुणवद्भवेत् ॥ १११६
अहो बुद्धिमतां श्रेष्ठ शुभा बुद्धिरियं तव ।
विदितं वेदितव्यं ते कस्मान्मामनुपृच्छसि ॥ १११७
यु० उ० सर्वज्ञं त्वां कथं मोह आविशत्स्वर्गवासिनम् ।
अ० उ० सुप्रज्ञमपि चेच्छूरमृद्धिर्मोहयते नरम् ॥ १११८
वर्तमानः सुखे सर्वो मुह्यतीति मतिर्मम ।
सोऽहमैश्वर्यमोहेन मदाविष्टो युधिष्ठिर ॥ १११९
पतितः प्रतिसंबुद्धस्त्वां तु संबोधयाम्यहम् ।
ब्रह्मर्षीणां सहस्रं हि उवाह शिबिकां मम ॥ ११२०
तत्र ह्यगस्त्यः पादेन वहन् स्पृष्टो मया मुनिः ।
अगस्त्येन ततोऽस्म्युक्तो ध्वंस सर्पेति वै रुषा ॥ ११२१
ततः स मामुवाचेदं प्रपतंतं कृपान्वितः ।
युधिष्ठिरो धर्मराजः शापात्त्वां मोक्षयिष्यति ॥ ११२२
ततो मे विस्मयो जातस्तद्दृष्ट्वा तपसो बलम् ।
ब्रह्म च ब्राह्मणत्वं च येन त्वाऽहमचूचुदम् ॥ ११२३
सत्यं दमस्तपो दानमहिंसा धर्मनित्यता ।
साधकानि सदा पुंसां न जातिर्न कुलं नृप ॥ ११२४
अरिष्ट एष ते भ्राता भीमसेनो महाबलः ।
स्वस्ति तेऽस्तु महाराज गमिष्यामि दिवं पुनः ॥ ११२५

इत्युक्त्वाऽजगरं देहं मुक्त्वा स नहुषो नृपः ।
दिव्यं वपुः समास्थाय गतस्त्रिदिवमेव ह ॥　११२६
युधिष्ठिरोऽपि धर्मात्मा भ्रात्रा भीमेन संगतः ।
धौम्येन सहितः श्रीमानाश्रमं पुनरागमत् ॥　११२७
ते वै मुमुदिरे वीराः प्रसन्नसलिलां शिवाम् ।
पश्यंतो दृढधन्वानः परिपूर्णां सरस्वतीम् ॥　११२८
तेषां पुण्यतमा रात्रिः पर्वसंधौ स्म शारदी ।
तत्रैव वसतामासीत् कार्तिकी जनमेजय ॥　११२९
तमिस्राभ्युदये तस्मिन् धौम्येन सह पांडवाः ।
सूतैः पौरोगवैश्चैव काम्यकं प्रययुर्वनम् ॥　११३०

---

## २२.

ततस्ते पांडवाः शीघ्रं प्रययुर्धर्मकोविदाः ।
ब्राह्मणैः सहिता राजन् ये च तत्र सहोषिताः ॥　११३१
इंद्रसेनादिभिश्चैव प्रेष्यैरनुगतास्तदा ।
ते यात्वाऽनुसृतैर्मार्गैः स्वन्नैः शुचिजलान्वितैः ॥　११३२
ददृशुः काम्यकं पुण्यमाश्रमं तपसा युतम् ।
पांडवा मृगयाशीलाश्चरंतस्तन्महद्वनम् ॥　११३३
विजह्रुरिंद्रप्रतिमाः कंचित्कालमरिंदम ।
ततस्ते यौगपद्येन ययुः सर्वे चतुर्दिशम् ॥　११३४
मृगयां पुरुषव्याघ्रा ब्राह्मणार्थे परंतपाः ।
द्रौपदीमाश्रमे न्यस्य तृणबिंदोरनुज्ञया ॥　११३५
महर्षेर्दीप्ततपसो धौम्यस्य च पुरोधसः ।
ततस्तु राजा सिंधूनां वार्द्धक्षत्रिर्महायशाः ॥　११३६
विवाहकामः शाल्वेयान् प्रयातः सोऽभवत्तदा ।
तत्रापश्यत् प्रियां भार्यां पांडवानां यशस्विनीम् ॥　११३७
तिष्ठंतीमाश्रमद्वारि द्रौपदीं निर्जने वने ।
विभ्राजमानां वपुषा बिभ्रन्तीं रूपमुत्तमम् ॥　११३८
भ्राजयन्तीं वनोद्देशं नीलाभ्रमिव विद्युतम् ।
ततः स राजा सिंधूनां वार्द्धक्षत्रिर्जयद्रथः ॥　११३९

विस्मितस्त्वनवद्यांगीं दृष्ट्वा तां दुष्टमानसः ।
स कोटिकास्यं राजानमब्रवीत् काममोहितः ॥ ११४०
कस्य त्वेषानवद्यांगी यदि वाऽपि न मानुषी ।
एतां दृष्ट्वा स्त्रियो मेऽन्या यथा शाखामृगस्त्रियः ॥ ११४१
प्रतिभांति महाबाहो सत्यमेतद् ब्रवीमि ते ।
तां समाचक्ष्व कल्याणीं यदि स्याच्छैब्यमानुषी ॥ ११४२
को० उ० एषा वै द्रौपदी कृष्णा राजपुत्री यशस्विनी ।
पंचानां पांडुपुत्राणां महिषी संमता भृशम् ॥ ११४३
एवमुक्तः प्रत्युवाच पश्यामि द्रौपदीमिति ।
पतिः सौवीरसिंधूनां दुष्टभावो जयद्रथः ॥ ११४४
स प्रविश्याश्रमं पुण्यं सिंहगोष्ठं वृको यथा ।
आत्मना सप्तमः कृष्णामिदं वचनमब्रवीत् ॥ ११४५
कुशलं ते वरारोहे भर्तारस्तेऽप्यनामयाः ।
येषां कुशलकामाऽसि तेऽपि कच्चिदनामयाः ॥ ११४६
द्रौ० उ० अपि ते कुशलं राज्ये राष्ट्रे कोषे बले तथा ।
कौरव्यः कुशली राजा कुंतीपुत्रो युधिष्ठिरः ॥ ११४७
पाद्यं प्रतिगृहाणेदमासनं च नृपात्मज ।
मृगान् पंचशतं चैव प्रातराशं ददानि ते ॥ ११४८
ऐणेयान् पृषतान् न्यंकून् हरिणांश्छरभांश्छशान् ।
प्रदास्यति स्वयं तुभ्यं कुंतीपुत्रो युधिष्ठिरः ॥ ११४९
ज० उ० कुशलं प्रातराशस्य सर्वं मे दित्सितं त्वया ।
एहि मे रथमारोह सुखमाप्नुहि केवलम् ॥ ११५०
गतश्रीकान् हृतराज्यान् कृपणान् गतचेतसः ।
अरण्यवासिनः पार्थान्नानुरोद्धुं त्वमर्हसि ॥ ११५१
श्रिया विहीना राष्ट्राच्च विनष्टाः शाश्वतीः समाः ।
अलं ते पांडुपुत्राणां भक्त्या क्लेशमुपासितुम् ॥ ११५२
भार्या मे भव सुश्रोणि त्यजैनान्सुखमाप्नुहि ।
अखिलान् सिंधुसौवीरानाप्नुहि त्वं मया सह ॥ ११५३
इत्युक्ता सिंधुराजेन वाक्यं हृदयकंपनम् ।
कृष्णा तस्मादपाक्रामद्देशात्सभ्रूकुटीमुखी ॥ ११५४

अवमत्यास्य तद्वाक्यमाक्षिप्य च सुमध्यमा ।
मैवमित्यब्रवीत्कृष्णा लज्जस्वेति च सैंधवम् ॥ ११५५
साताननुप्रेक्ष्य विशालनेत्रा जिघृक्षमाणा न च भर्त्सयंती ।
प्रोवाच मा मा स्पृशतेति भीता धौम्यं प्रचुक्रोश पुरोहितं सा ॥ ११५६
जग्राह तामुत्तरवस्त्रदेशे जयद्रथस्तं समवाक्षिपत्सा ।
तया समाक्षिप्ततनुः स पापः पपात शाखीव निकृत्तमूलः ॥ ११५७
प्रगृह्यमाणा तु महाजवेन मुहुर्विनिश्वस्य च राजपुत्री ।
सा कृष्यमाणा रथमारुरोह धौम्यस्य पादावभिवाद्य कृष्णा ॥ ११५८
ततो दिशः संप्रविहृत्य पार्था मृगान्वराहान्महिषांश्च हत्वा ।
धनुर्धराः श्रेष्ठतमाः पृथिव्यां पृथक् चरंतः सहिता बभूवुः ॥ ११५९
भ्रातृंश्च तानभ्यवदद्युधिष्ठिरः श्रुत्वा गिरो व्याहरतां मृगाणाम् ।
क्षिप्रं निवर्तध्वमलं मृगैर्नो मनो हि मे दूयति दह्यते च ॥ ११६०
सरः सुपर्णेन हृतोरगं यथा राष्ट्रं यथाऽराजकमात्तलक्ष्मि ।
एवंविधं मे प्रतिभाति काम्यकं शौंडैर्यथा पीतरसश्च कुंभः ॥ ११६१
ते सैंधवैरत्यनिलोग्रवेगैर्महाजवैर्वाजिभिरुह्यमानाः ।
युक्तैर्बृहद्भिः सुरथैर्नृवीरास्तदाश्रमायाभिमुखा बभूवुः ॥ ११६२
इत्येव ते तद्वनमाविशंतो महत्यरण्ये मृगयां चरित्वा ।
बालामपश्यंत तदा रुदंतीं धात्रेयिकां प्रेष्यवधूं प्रियायाः ॥ ११६३
अथाब्रवीच्चारुमुखं विमृष्य धात्रेयिका सारथिमिंद्रसेनम् ।
जयद्रथेनापहृता प्रमथ्य पंचेंद्रकल्पान्परिभूय कृष्णा ॥ ११६४
तिष्ठंति वर्त्मानि नवान्यमूनि वृक्षाश्च न म्लांति तथैव भग्नाः ।
गृह्णीत चापानि महाधनानि शरांश्च शीघ्रं पदवीं चरध्वम् ॥ ११६५
पुरा हि निर्भर्त्सनदण्डमोहिताः प्रमोहचित्ता वदनेन शुष्यता ।
ददाति कस्मैचिदनर्हते तनुं वराज्यपूर्णामिव भस्मनि स्रुचम् ॥ ११६६
मा वः प्रियायाः सुनसं सुलोचनं चंद्रप्रभाच्छं वदनं प्रसन्नम् ।
स्पृश्याच्छुभं कश्चिदकृत्यकारी श्वा वै पुरोडाशमिवाध्वरस्थम् ॥ ११६७
यु०उ० भद्रे प्रतिक्राम नियच्छ वाचं मास्मत्सकाशे परुषाण्यवोचः ।
एतावदुक्त्वा प्रययुर्हि शीघ्रं तान्येव वर्त्मान्यनुवर्तमानाः ॥ ११६८
मुहुर्मुहुर्व्यालवदुच्छ्वसंतो ज्यां विक्षिपंतश्च महाधनुर्भ्यः ।
ततोऽपश्यंस्तस्य सैन्यस्य रेणुमुद्धूतं वै वाजिखुरप्रणुन्नम् ॥ ११६९

पदातीनां मध्यगतं च धौम्यं विक्रोशंतं भीममभिद्रवेति ।
ते सांत्व्य धौम्यं परिदीनसत्वाः सुखं भवानेत्विति राजपुत्राः॥११७०
श्येना यथैवामिषसंप्रयुक्ता जवेन तत्सैन्यमथाभ्यधावन् ।
तेषां महेंद्रोपमविक्रमाणां संरब्धानां धर्षणाद्याज्ञसेन्याः ॥ ११७१
क्रोधः प्रजज्वाल जयद्रथं च दृष्ट्वा प्रियां तस्य रथे स्थितां च ।
प्रचुक्रुशुश्चाप्यथ सिंधुराजं वृकोदरश्चैव धनंजयश्च ॥
यमौ च राजा च महाधनुर्धरास्ततो दिशः संमुमुहुः परेषाम् ॥११७२

ततो घोरतमः शब्दो रणे समभवत्तदा ।
भीमार्जुनयमान्दृष्ट्वा सैन्यानां सयुधिष्ठिरान् ॥ ११७३
शिबिसौवीरसिंधूनां विषादश्चाप्यजायत ।
गजं तु सगजारोहं पदातींश्च चतुर्दश ॥ ११७४
जघान गदया भीमः सैंधवध्वजिनीमुखे ।
पार्थः पंचशतांश्शूरान्पार्वतीयान्महारथान् ॥ ११७५
परीप्समानः सौवीरं जघान ध्वजिनीमुखे ।
राजा स्वयं सुवीराणां प्रवराणां प्रहारिणाम् ॥ ११७६
निमेषमात्रेण शतं जघान समरे तदा ।
ददृशे नकुलस्तत्र रथात्प्रस्कंद्य खड्गधृक् ॥ ११७७
शिरांसि पादरक्षाणां बीजवत्प्रवपन्मुहुः ।
सहदेवस्तु संधाय रथेन गजयोधिनः ॥ ११७८
द्वादशानां तु सर्वेषां सौवीराणां धनंजयः ।
चकर्त निशितैर्भल्लैर्धनूंषि च शिरांसि च ॥ ११७९
प्रच्छाद्य पृथिवीं तस्थुः सर्वमायोधनं प्रति ।
शरीराण्यशिरस्कानि विदेहानि शिरांसि च ॥ ११८०
हतेषु तेषु वीरेषु सिंधुराजो जयद्रथः ।
विमुच्य कृष्णां संत्रस्तः पलायनमनाऽभवत् ॥ ११८१
स तस्मिन्संकुले सैन्ये द्रौपदीमवतार्य ताम् ।
प्राणप्रेप्सुरुपाधावद्वनं येन नराधमः ॥ ११८२
द्रौपदीं धर्मराजस्तु दृष्ट्वा धौम्यपुरस्कृताम् ।
माद्रीपुत्रेण वीरेण रथमारोपयत्तदा ॥ ११८३

हतप्रवीरा रिपवो भूयिष्ठं विद्रुता दिशः ।
गृहीत्वा द्रौपदीं राजन्निवर्ततु भवानितः ॥ ११८४
यमाभ्यां सह राजेंद्र धौम्येन च महात्मना ।
प्राप्याश्रमपदं राजन् द्रौपदीं परिसांत्वय ॥ ११८५
नहि मे मोक्ष्यते जीवन् मूढः सैंधवको नृपः ।
पातालतलसंस्थोऽपि यदि शक्रोऽस्य सारथिः ॥ ११८६
युο उο न हंतव्यो महाबाहो दुरात्माऽपि स सैंधवः ।
दुःशलामभिसंस्मृत्य गांधारीं च यशस्विनीम् ॥ ११८७
तच्छ्रुत्वा द्रौपदी भीममुवाच व्याकुलेंद्रिया ।
कुपिता ह्रीमती प्राज्ञा पती भीमार्जुनावुभौ ॥ ११८८
कर्तव्यं चेत्प्रियं मह्यं वध्यः स पुरुषाधमः ।
सैंधवापसदः पापो दुर्मतिः कुलपांसनः ॥ ११८९
इत्युक्तौ तौ नरव्याघ्रौ ययतुर्यत्र सैंधवः ।
राजा निववृते कृष्णामादाय सपुरोहितः ॥ ११९०
स प्रविश्याश्रमपदं व्यपविद्धबृषीमठम् ।
मार्कंडेयादिभिर्विप्रैरनुकीर्णं ददर्श ह ॥ ११९१
ते स्म तं मुदिता दृष्ट्वा पुनः प्रत्यागतं नृपम् ।
जित्वा तान् सिंधुसौवीरान् द्रौपदीं चाहृतां पुनः ।
स तैः परिवृतो राजा तत्रैवोपविवेश ह ॥ ११९२
प्रविवेशाश्रमं कृष्णा यमाभ्यां सह भाविनी ।
भीमसेनार्जुनौ चापि श्रुत्वा क्रोशगतं रिपुम् ॥ ११९३
स्वयमश्वांस्तुदंतौ तौ जवेनैवाभ्यधावताम् ।
इदमत्यद्भुतं चात्र चकार पुरुषोऽर्जुनः ॥ ११९४
क्रोशमात्रगतानश्वान् सैंधवस्य जघान यत् ।
स हि दिव्यास्त्रसंपन्नः कृच्छ्रकालेऽप्यसंभ्रमः ॥ ११९५
अकरोदुष्करं कर्म शरैरस्त्रानुमंत्रितैः ।
सैंधवस्तु हतान् दृष्ट्वा तथाऽश्वान्स्वान्सुदुःखितः॥ ११९६
पलायनकृतोत्साहः प्राद्रवद्येन वै वनम् ।
तिष्ठतिष्ठेति तं भीमः सहसाऽभ्यद्रवद्बली ॥ ११९७

मावधीरिति पार्थस्तं दयावान् प्रत्यभाषत ।
तं भीमसेनो धावंतमवतीर्य रथाद्बली ॥ ११९८
अभिद्रुत्य निजग्राह केशपक्षे ह्यमर्षणः ।
समुद्यम्य च तं भीमो निष्पिपेष महीतले ॥ ११९९
शिरो गृहीत्वा राजानं ताडयामास चैव ह ।
पुनः संजीवमानस्य तस्योत्पतितुमिच्छतः ॥ १२००
पदा मूर्ध्नि महाबाहुः प्राहरद्विलपिष्यतः ।
एवमुक्त्वा जटास्तस्य पंच चक्रे वृकोदरः ॥ १२०१
अर्धचंद्रेण बाणेन किंचिदब्रुवतस्तदा ।
दासोऽस्मीति त्वया वाच्यं संसत्सु च सभासु च ॥ १२०२
एवं ते जीवितं दद्यामेषयुद्धजितो विधिः ।
एवमस्त्विति तं राजा कृष्यमाणो जयद्रथः ॥ १२०३
तत एनं विचेष्टंतं बध्वा पार्थो वृकोदरः ।
रथमारोपयामास विसंज्ञं पांसुगुंठितम् ॥ १२०४
ततस्तं रथमास्थाय भीमः पार्थानुगस्तदा ।
अभ्येत्याश्रममध्यस्थमभ्यगच्छद्युधिष्ठिरम् ॥ १२०५
राजानं चाब्रवीद्भीमो द्रौपद्याः कथ्यतामिति ।
दासभावं गतो ह्येष पांडूनां पापचेतनः ॥ १२०६
तमुवाच ततो ज्येष्ठो भ्राता सप्रणयं वचः ।
मुंचेममधमाचारं प्रमाणा यदि ते वयम् ॥ १२०७
द्रौपदी चाब्रवीद्भीममभिप्रेक्ष्य युधिष्ठिरम् ।
दासोऽयं मुच्यतां राज्ञस्त्वया पंचसटः कृतः ॥ १२०८
एवमुक्तस्तु सव्रीडं तूष्णीं किंचिदवाङ्मुखः ।
जगाम राजन् दुःखार्तो गंगाद्वाराय भारत ॥ १२०९
स देवं शरणं गत्वा विरूपाक्षमुमापतिम् ।
तपश्चचार विपुलं तस्य प्रीतो वृषध्वजः ॥ १२१०

---

## २३.

यु० उ० नात्मानमनुशोचामि नेमान्भ्रातॄन्महामुने ।
हरणं चापि राज्यस्य यथेमां द्रुपदात्मजाम् ॥ १२११

द्यूते दुरात्मभिः क्लिष्टाः कृष्णया तारिता वयम् ।
जयद्रथेन च पुनर्वनाच्चापि हृता बलात् ॥ १२१२
अस्ति सीमंतिनी काचिदृष्टपूर्वापि वा श्रुता ।
पतिव्रता महाभागा यथेयं द्रुपदात्मजा ॥ १२१३
मा० उ० आसीन्मद्रेषु धर्मात्मा राजा परमधार्मिकः ।
पार्थिवोऽश्वपतिर्नाम सर्वभूतहिते रतः ॥ १२१४
अपत्योत्पादनार्थं च तीव्रं नियममास्थितः ।
कस्मिंश्चित्तु गते काले स राजा नियतव्रतः ॥ १२१५
ज्येष्ठायां धर्मचारिण्यां महिष्यां गर्भमादधे ।
प्राप्ते काले तु सुषुवे कन्यां राजीवलोचनाम् ॥ १२१६
क्रियाश्च तस्या मुदितश्चक्रे स नृपसत्तमः ।
सावित्र्या प्रीतया दत्ता सावित्र्या हुतया ह्यपि ॥ १२१७
सावित्रीत्येव नामास्याश्चक्रुर्विप्रास्तथा पिता ।
सा विग्रहवतीव श्रीर्व्यवर्धत नृपात्मजा ॥ १२१८
कालेन चापि सा कन्या यौवनस्था बभूव ह ।
तां सुमध्यां पृथुश्रोणीं प्रतिमां कांचनीमिव ॥ १२१९
प्राप्तेयं देवकन्येति दृष्ट्वा संमेनिरे जनाः ।
यौवनस्थां तु तां दृष्ट्वा स्वां सुतां देवरूपिणीम् ॥ १२२०
अयाच्यमानां च वरैर्नृपतिर्दुःखितोऽभवत् ।
पुत्रि प्रदानकालस्ते न च कश्चिद्वृणोति माम् ॥ १२२१
स्वयमन्विच्छ भर्तारं गुणैः सदृशमात्मनः ।
अप्रदाता पिता वाच्यो वाच्यश्चानुपयन्पतिः ॥ १२२२
मृते भर्तरि पुत्रश्च वाच्यो मातुररक्षिता ।
इदं मे वचनं श्रुत्वा भर्तुरन्वेषणे त्वर ॥ १२२३
देवतानां यथा वाच्यो न भवेयं तथा कुरु ।
एवमुक्त्वा दुहितरं तथा वृद्धांश्च मंत्रिणः ॥ १२२४
व्यादिदेशानुयात्रं च गम्यतां चेत्यचोदयत् ।
साऽभिवाद्य पितुः पादौ व्रीडितेव तपस्विनी ॥ १२२५
पितुर्वचनमाज्ञाय निर्जगामाविचारितम् ।
सा हैमं रथमास्थाय स्थविरैः सचिवैर्वृता ॥ १२२६

तपोवनानि रम्याणि राजर्षीणां जगाम ह ।
अथ मद्राधिपो राजा नारदेन समागतः ॥ १२२७
उपविष्टः सभामध्ये कथायोगेन भारत ।
ततोऽभिगम्य तीर्थानि सर्वाण्येवाश्रमांस्तथा ॥ १२२८
आजगाम पितुर्वेश्म सावित्री सह मंत्रिभिः ।
सा ब्रूहि विस्तरेणेति पित्रा संचोदिता शुभा ॥ १२२९
दैवतस्येव वचनं प्रतिगृह्येदमब्रवीत् ।
आसीच्छाल्वेषु धर्मात्मा क्षत्रियः पृथिवीपतिः ॥ १२३०
द्युमत्सेन इति ख्यातः पश्चाच्चांधो बभूव ह ।
विनष्टचक्षुषस्तस्य बालपुत्रस्य धीमतः ॥ १२३१
सामीप्येन हृतं राज्यं च्छिद्रेऽस्मिन्पूर्ववैरिणा ।
स बालवत्सया सार्द्धं भार्यया प्रस्थितो वनम् ॥ १२३२
महारण्यं गतश्चापि तपस्तेपे महाव्रतः ।
तस्य पुत्रः पुरे जातः संवृद्धश्च तपोवने ॥ १२३३
सत्यवाननुरूपो मे भर्तेति मनसा वृतः ।
ना० उ० अहो बत महत्पापं सावित्र्या नृपते कृतम् ॥ १२३४
अजानंत्या यदनया गुणवान्सत्यवान्वृतः ।
एक एवास्य दोषो हि गुणानाक्रम्य तिष्ठति ॥ १२३५
संवत्सरेण क्षीणायुर्देहन्यासं करिष्यति ।
अ० उ० एहि सावित्रि गच्छस्व अन्यं वरय शोभने ॥ १२३६
तस्य दोषो महानेको गुणानाक्रम्य च स्थितः ।
सा० उ० सकृदंशो निपतति सकृत्कन्या प्रदीयते ॥ १२३७
सकृदाह ददानीति त्रीण्येतानि सकृत्सकृत् ।
दीर्घायुरथवाऽल्पायुः सगुणो निर्गुणोऽपि वा ॥ १२३८
सकृद्वृतो मया भर्ता न द्वितीयं वृणोम्यहम् ।
ना० उ० स्थिरा बुद्धिर्नरश्रेष्ठ सावित्र्या दुहितुस्तव ॥ १२३९
अविघ्नमस्तु सावित्र्याः प्रदाने दुहितुस्तव ।
साधयिष्याम्यहं तावत्सर्वेषां भद्रमस्तु वः ॥ १२४०
एवमुक्त्वा खमुत्पत्य नारदस्त्रिदिवं गतः ।
राजापि दुहितुः सज्जं वैवाहिकमकारयत् ॥ १२४१

ततः सर्वान् समानीय द्विजानाश्रमवासिनः ।
यथाविधि समुद्वाहं कारयामासतुर्नृपौ ॥ १२४२
दत्वा सोऽश्वपतिः कन्यां यथाऽर्हं च परिच्छदम् ।
ययौ स्वमेव भवनं युक्तः परमया मुदा ॥ १२४३
सत्यवानपि तां भार्यां लब्ध्वा सर्वगुणान्विताम् ।
मुमुदे सा च तं लब्ध्वा भर्तारं मनसेप्सिम् ॥ १२४४
गते पितरि सर्वाणि संन्यस्याभरणानि सा ।
जगृहे वल्कलान्येव वस्त्रं काषायमेव च ॥ १२४५
परिचारैर्गुणैश्चैव प्रश्रयेण दमेन च ।
सर्वकामक्रियाभिश्च सर्वेषां तुष्टिमादधे ॥ १२४६
श्वश्रूं शरीरसत्कारैः सर्वैराच्छादनादिभिः ।
श्वशुरं देवसत्कारैर्वाचःसंयमनेन च ॥ १२४७
एवं तत्राश्रमे तेषां तदा निवसतां सताम् ।
कालस्तपस्यतां कश्चिदपाक्रामत भारत ॥ १२४८
सावित्र्या ग्लायमानायास्तिष्ठंत्यास्तु दिवानिशम् ।
नारदेन यदुक्तं तद्वाक्यं मनसि वर्तते ॥ १२४९
चतुर्थेऽहनि मर्तव्यमिति संचिंत्य भाविनी ।
व्रतं त्रिरात्रमुद्दिश्य दिवारात्रं स्थिताऽभवत् ॥ १२५०
श्वोभूते भर्तृमरणे सावित्र्या भरतर्षभ ।
दुःखान्वितायास्तिष्ठंत्याः सा रात्रिर्व्यत्यवर्तत ॥ १२५१
अद्य तद्दिवसं चेति हुत्वा दीप्तं हुताशनम् ।
युगमात्रोदिते सूर्ये कृत्वा पौर्वाह्णिकीः क्रियाः ॥ १२५२
ततः सर्वान्द्विजान्वृद्धान् श्वश्रूं श्वशुरमेव च ।
अभिवाद्यानुपूर्व्येण प्रांजलिर्नियता स्थिता ॥ १२५३
अवैधव्याशिषस्ते तु सावित्र्यर्थं हिताः शुभाः ।
ऊचुस्तपस्विनः सर्वे तपोवननिवासिनः ॥ १२५४
स्कंधे परशुमादाय सत्यवान्प्रस्थितो वनम् ।
सावित्री त्वाह भर्तारं नैकस्त्वं गंतुमर्हसि ॥ १२५५
सह त्वया गमिष्यामि न हि त्वां हातुमुत्सहे ।
उपवासान्न मे ग्लानिर्नास्ति चापि परिश्रमः ॥ १२५६

गमने च कृतोत्साहां प्रतिषेद्धुं न माऽर्हसि ।
साऽभिवाद्याब्रवीच्छ्वश्रूं श्वशुरं च महाव्रता ॥ १२५७
अयं गच्छति मे भर्ता फलाहारो महावनम् ।
इच्छेयमभ्यनुज्ञाता आर्यया श्वशुरेण ह ॥ १२५८
अनेन सह निर्गतुं न मेऽद्य विरहः क्षमः ।
उभाभ्यामभ्यनुज्ञाता सा जगाम यशस्विनी । १२५९
सह भर्त्रा हसंतीव हृदयेन विदूयता ।
अथ भार्यासहायः स फलान्यादाय वीर्यवान् ॥ १२६०
कठिनं पूरयामास ततः काष्ठान्यपाटयत् ।
तस्य पाटयतः काष्ठं स्वेदो वै समजायत ॥ १२६१
व्यायामेन च तेनास्य जज्ञे शिरसि वेदना ।
सोऽभिगम्य प्रियां भार्यामुवाच श्रमपीडितः ॥ १२६२
व्यायामेन ममानेन जाता शिरसि वेदना ।
शूलैरिव शिरो विद्धमिदं संलक्षयाम्यहम् ॥ १२६३
तत्स्वप्तुमिच्छे कल्याणि न स्थातुं शक्तिरस्ति मे ।
सा समासाद्य सावित्री भर्त्तारमुपगम्य च ॥ १२६४
उत्संगेऽस्य शिरः कृत्वा निषसाद महीतले ।
मुहूर्तादेव चापश्यत्पुरुषं रक्तवाससम् ॥ १२६५
बद्धमौलिं वपुष्मंतमादित्यसमतेजसम् ।
श्यामावदातं रक्ताक्षं पाशहस्तं भयावहम् ॥ १२६६
स्थितं सत्यवतः पार्श्वे निरीक्षंतं तमेव च ।
तं दृष्ट्वा सहसोत्थाय भर्तुर्न्यस्य शनैः शिरः ॥ १२६७
कृतांजलिरुवाचार्ता हृदयेन प्रवेपती ।
दैवतं त्वाऽभिजानामि वपुरेतद्ध्यमानुषम् ॥ १२६८
कामया ब्रूहि देवेश कस्त्वं किं च चिकीर्षसि ।
य० उ० पतिव्रतासि सावित्रि तथैव च तपोऽन्विता ॥ १२६९
अतस्त्वामभिभाषामि विद्धि मां त्वं शुभे यमम् ।
अयं ते सत्यवान्भर्ता क्षीणायुः पार्थिवात्मजः ॥ १२७०
नेष्यामि तमहं बद्ध्वा विद्ध्येतन्मे चिकीर्षितम् ।
अयं च धर्मसंयुक्तो रूपवान् गुणसागरः ॥ १२७१

